*Kashmir Series of Texts and Studies,*

NO. LXIII.



# THE
# DEVĪNĀMAVILĀSA

BY

SĀHIB KAUL



EDITED BY

PAṆḌIT MADHUSŪDAN KAUL SHĀSTRĪ,
Superintendent Research Department,
His Highness, Government
JAMMU & KASHMIR,
SRINAGAR.



Published under the authority of the Government of His Highness Rājarājeśvara Mahārājādhirāja
ŚRĪ MAHĀRĀJĀ HARISINGH JI BAHADUR,
G. C. S. I., G. C. I. E., K. C. V. O., LL. D.
MAHĀRĀJĀ OF JAMMU & KASHMIR.

LAHORE:
PRINTED AT THE MANOHAR ELECTRIC PRESS.
1942 A. D.

श्रीसोमानन्दनाथप्रभृतिगुरुवरादिष्टसन्नीतिमार्गो
लब्ध्वा यत्रैव सम्यक् पटिमनि घटनामीश्वराद्वैतवादः ।
कश्मीरेभ्यः प्रसृत्य प्रकटपरिमलो रञ्जयन् सर्वदेशान्
देशेऽन्यस्मिन्नदृष्टो घुसृणविसरवत् सर्ववन्द्यत्वमाप ॥१॥

तरत तरसा संसाराब्धिं विधत्त परे पदे
पदमविचलं नित्यालोकप्रमोदसुनिर्भरे ।
विमृशत शिवादिष्टाद्वैतावबोधसुधारसं
प्रसभविलसत्सद्युक्त्यान्तःसमुत्प्लवदायिनम् ॥२॥

ॐ

काश्मीर-संस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ६२

# देवीनामविलासः

श्रीमन्महामाहेश्वराचार्यवर्य-साहिबकौलविरचितः ।



श्रीराजराजेश्वर-महाराजाधिराज-काश्मीरनरेन्द्र-

श्रीहरिसिंहजी-बहादुराज्ञया

रिसर्चकार्यालयाध्यक्ष-पण्डित-मधुसूदनकौल-शास्त्रिणा

उद्दिष्टकार्यालयस्थेतरपण्डितसहायेन

संशोधनादिसंस्करणोत्तरं

संपाद्य प्रकाशितः

संवत् १९९८. काश्मीर-श्रीनगर ख्रैस्ताब्दः १९४२.

# PREFACE.

The present edition of the Devīnāmavilāsa of Sāhib Kaula of Kashmir forms the sixtythird volume of the Kashmir Series of Texts and Studies. It is based on the collation of the following Manuscript material.

क. A birchbark manuscript in Śāradā characters belonging to Pt. Radha Krishan Kaul of Srinagar. Contains 121 leaves having 16 lines on each side with 21 letters in each line. Old and partly decayed. Correct. Measures 10½″ × 7½″.

ख. Written on country-paper in Śāradā characters. Belongs to Pt. Śivanāth Śarmā of the Research Department. Contains 110 leaves having 19 lines on each side with 23 letters in each line. Fresh. Measures 9½″ × 7½″.

ग. Of the Departmental library. Consists of 537 leaves with 8 lines per page having 12 letters per line. Written in Śāradā characters on country-paper. Measures 8″ × 6½″.

ख. New purchase of the Department. Written in Śāradā characters on old country-paper, containing 190 leaves with 16 lines per page of 16 letters each. Measures $7\frac{1}{2}'' \times 5\frac{1}{2}''$.

# INTRODUCTION.

The Devīnāmavilāsa is the fruit of the poetic talent of Sāhib Kaula. In it he has tried to follow the same theme as is given in the Bhavāni-sahasranāma. The scene is laid in the Mount Kailāsa as in the Bhavānī-sahasranāma. Each of the thousand names given of the goddess is furnished with an explanation in the Poem. It is divided into sixteen cantos and each conto is called a Bhakti, a part or devotion.

## SUMMARY OF THE CANTOS.

Canto I. Describes the romantic scenery of the Kailāsa and the different parts of the body of Śiva whose chief abode is the Kailāsa.

Canto. II. Describes Nandī the attendant-in-chief of Śiva and his duties as such, the Darbār of Śiva and the homage paid by the gods to him.

Canto III. In this Nandī offers to his lord Śiva a hymn of praises and implores him to take him into confidence as to the object of his contemplation.

Canto IV. In it Śiva reveals the glory of his consort Devī, fully describing her bodily form from the foot to the crown of the head.

Canto V. Herein Śiva further describes how the Devī is worshipped by the different beings created by her and undertakes to reveal to Nandī the Sahasranāma or the thousand names of the Devī.

Cantos VI to XV are devoted to providing the explanations for each name of the Devī of thousand names.

Canto XVI. It sets forth beautifully the uses to which the Sahasranāma or the thousand names can be put and the merit that accrues from its recitation etc.

Sāhib Kaula composed the Devīnāmavilāsa in the Vikrama year 1723 corresponding to 1666 A. D. on the 14th bright day of Baisākh. While recording 1676 A. D. as the date of his another composition called Kalpavriksha, he says that he was fortyseven years old at that time. From this we can conclude that he was born in the year 1629 A. D. He came of the family of Kaulas.

His parents were known by the names of Krishna Kaula and Buddhi. He had two brothers, one elder and the other younger namely Sudarśana Kaula and Siddha Kaula. The name of his maternal grand-father was Śiva Rājānaka of Lābru family.

He received his initiation from his maternal uncle Jnāna Svāmi. His wife was called Śrī Devī. Two sons were born to her Nātha Kaula and Jyotishprakāśa Kaula. Gaṅgā seems to have been his elder sister. There are very many direct descendants of him living at present in Srinagar. The present editor of the Kashmir Series of Texts & Studies has the honour of being the eight in descent from Sahib Kaula. A large number of anecdotes is related about the spiritual powers that he used to exercise during his lifetime, but their narration is off the mark as in the following pages he is put before the world of scholars only as a literary man.

In the Devīnāmavilāsa, he has given us a good proof of his scholarship and his love of alliteration and other figures of speech is much in evidence. Of the artificial poetry also, he has given some instances towards the end of the poem.

The other literary compositions, which are associated with him, are named below :—

1. Śivasiddhinīti.
2. Gāyatrīmantrabhāshya.
3. Chitsphārasārādvaya.
4. Sacchidānandakandalī.
5. Śivaśaktivilāsa.
6. Śārikāstava.
7. Guruvrittachintāmaṇi.

8. Sahajārchanashashtikā.
9. Nijātmabodha.
10. Chandramaulistava.
11. Suprabhātastava.
12. Gītāsāra.
13. Jātakodāharaṇa.

---

# शुद्धिपत्रम्

| पार्श्वे | पङ्क्तौ | शुद्धम् | अशुद्धम् |
|---|---|---|---|
| २१ | २ | शास्त्राणां | शस्त्राणां |
| २३ | २१ | संस्पर्धितुं | सस्पर्धितुं |
| २६ | ५ | कुण्डली | कुडली |
| ३९ | २१ | देहादिकाच्चित्तं | देहादिकाश्चित्तं |
| ४० | २ | भेदायुजैतस्य | भेदाय नैतस्य |
| ४० | १३ | मतादिभाता | मतादि भाता |
| ४६ | १० | वार्चार | वाश्चार |
| ४६ | १८ | स्वविदं | स्नवदं |
| ४७ | ३ | वहिर्मुखं | बहिर्मुख |
| ५१ | ९ | निजोद्द्योत | निजोद्योत |
| ५९ | ६ | नानोद्द्योता | नानोद्योता |
| ६८ | २ | वैकसखताम् | वैकसखिताम् |
| ६८ | १० | वृत्त्योत्प्लुत्या | वृत्योप्लुत्या |
| ७४ | १ | कलितै | कलिते |
| ७५ | १२ | स्मृतिर्वैष्णव्यत्र | स्मृतिर्वैष्णव्यत्र |
| ७५ | १३ | बलयुतो | बलयतो |
| ७६ | २२ | प्रवद्धा | प्रबुद्धा |
| ७९ | ३ | मुखरै | मधुरै |

| पार्श्वे | पङ्क्तौ | शुद्धम् | अशुद्धम् |
|---|---|---|---|
| ९८ | २२ | प्राणतोऽपि | ाणतोऽपि |
| १०१ | १ | द्मिरैपि | द्मिरपि |
| १०२ | १४ | विविध | द्विविध |
| १०७ | ६ | दुर्वृत्ते: | दुर्वृत्त: |
| ११० | १८ | त्रिपुरेश्वरता | त्रिपुरेश्वरतां |
| ११९ | ३ | संकर्षणी | संकर्षिणी |
| १२० | १९ | यथोडुयूथम् | ययोडुयूथम् |
| १२४ | ८ | कलिताकाल | कलिता काल |
| १२७ | १९ | अखण्डाज्ञ | अखण्डज्ञ |
| १२९ | ९ | राद्दय | राज्य |
| १३२ | ७ | द्रढय | द्रव्य |
| १३२ | १५ | याशर्मशास्त्र | या शर्मशास्त्र |
| १४४ | ६ | समये | विषमे |
| १४९ | २ | ग्रसिता नलेन | ग्रसितानलेन |
| १५५ | ५ | समयेऽचिरेण | समये चिरेण |
| १५६ | १८ | यैकं | यकं |
| १५८ | २ | सुराजा | सुराज: |
| १७८ | २१ | कथं | कथ |
| १८२ | १८ | भ्रमा | भ्रम |
| १८५ | १५ | प्रख्या | प्रस्था |
| १९४ | २० | भेदवत्त्वच्च | भेदवत्त्वं च |
| १९८ | २० | विषद: | विशद: |
| २१२ | ७ | पदे | मदे |
| २२३ | ९ | स्याच्चिद्रूपा | स्याच्चि पा |
| २२३ | १५ | प्रथितं | प्रथित |
| २४५ | १४ | पदार्थ | पदाथ |

| पार्श्वे | पङ्क्तौ | शुद्धम् | अशुद्धम् |
|---|---|---|---|
| २८८ | १७ | यतो | ययतो |
| २८९ | ३ | मूर्तिः | मूर्ति |
| २९४ | १५ | शिरःस्थित्या | शिरः स्थित्या |
| ३०८ | १ | मुपादधाति | मुपदाधाति |
| ३१४ | ३ | वर्गात् | वगात् |
| ३१६ | ४ | स्वर्ग्यं | स्वर्ग्यं |
| ३२० | १७ | इत्यन्याप | इत्यन्योप |

ॐ

नमो विघ्नहर्त्रे ।

# देवीनामविलासः ।

## महामाहेश्वराचार्यवर्यसाहिबकौलानन्दनाथविरचितः ।

## प्रथमा भक्तिः ।

चिद्रूपं[1] कृत[2]नामरूपविभवं त्रैरूप्य[3]रूप्यं बुधै-
र्[4]आसीदस्ति भविष्यतीति वचसां दूरेऽपि सत्ता[5]वपुः ।
त्यक्ता[6]युक्तवियुक्तियुक्तिकलनं भक्तेषु[7] सूक्ति[8]प्रथं
श्रीशम्भो[9]र्जयति[10] स्वभाव[11]मधुरं तच्छक्तिरूपं महः ॥१॥

---

१. विमर्शसारम् । २. कृतो नामभिश्च तद्रूपैश्च विभवो निजादि-धरान्त ऐश्वर्यमयसृष्टिवर्गो येन, कृतानि सत्यानि च तानि नामानि तै रूपविभवो यस्येति वा, तेषां रूपेण विभवो यस्य अस्तीति वा, कृतो नामः प्रणामो यस्य ईदृशं यद्रूपं तेन विभवति व्याप्नोतीति वा, कृतं सत्यं च नाम्नैव नामैव वा रूपमाकारो यस्य ईदृशं यत् जगत् तस्मिन् विशेषेण शक्त्याख्येन भवतीति वा । ३. जाग्रदादि-त्रैरूप्येण विश्वप्राज्ञतैजसाद्येन, विन्दुबीजरेखाख्येन, शिवशक्त्यणु-भेदेन, वामादिभेदेन वा, अन्येन च बहुना त्रैरूप्येण रूप्यं निरूपणीयम् । ४. कालत्रयस्य । ५. कालातीतसत्तारूपम् । ६. त्यक्ता

सोऽहं तेन मुहुः प्रणुन्नहृदयः सर्वास्ववस्थास्वपि
सुन्दर्याः स्तवराज ईशकथिते नाम्नां पुरा नन्दिने ।
साहिब्कौल इति प्रसिद्धमहसि स्थानेऽमले दर्शये
स्वातन्त्र्येण[१] निवेशितात्मविभवः सूक्तेर्विलासं स्फुटम् ॥२॥
ऐशान्यां ककुभीश्वरः क्षितिभृतां कैलास इत्याख्यया
ख्यातो मानसराजहंसहसकृत्सौन्दर्यसारोद्धुरः ।
यत्रास्ते गिरिजावशीकृततनुः स्थाणुर्[२]विभूत्या सितो
भिक्षुः पक्षितया[३] प्रियाजनितया त्यक्त्वान्ययाने मनः ॥३॥
यत्र द्रष्टुमुपागता गतभया देवाधिदेवं शिवं
विष्णुर्[४]वा शतधैर्यवान्[५] शतमखश्छायाच्छलेन[६] क्षणम् ।
मालिन्यापहरामणीयकवपुःसारे[७] निमज्ज्योद्गता-
स्तास्ता रूपकला विदन्ति कृतिनो व्याप्तप्रकाशोदयाः ॥४॥
सद्रूपं प्रतिरूपितं परिणतं देवी चतुर्धा शिवा
यत्र[८] स्वस्य च पत्युरद्भुतमतिर्वीक्ष्यान्यथाशंकिनी ।

---

अयुक्ता वियुक्तियुक्तिकलना येन । ७. अनुग्राह्येषु । ८. सूक्त्या अनुमितप्रथम्, सूक्तिरेव प्रथा यस्य तेजसः सम्बन्धिनीति वा । ९. शमशेषोपद्रवरहितं चैतन्यानन्दलक्षणं भवत्यस्मादिति शम्भुः । १०. सर्वोत्कृष्टत्वेन वर्तते, अत एव सर्वनमस्यमिति अर्थाक्षिप्ता नतिः, देहाद्यभिमानप्राधान्यं प्रह्वीकृत्य तदावेशो नतिः । ११. स्वेन भावेन मधुरं, स्वभावात् वा मधुरम् ॥

१. अभेदे भेदनम्, भेदिते च अन्तरनुसन्धानेन अभेदनमिति स्वातन्त्र्यम् । २. स्थाणुरिति विरोधाभासः । ३. पक्षपातेन अथच पक्षितया पक्षिणो भावेन, अत एव पक्षितया अन्ययाने मनस्त्यक्त्वा,-इति विरोधच्छाया च । ४. व्यापको वैकुण्ठश्च । ५. बहुधैर्ययुक्तो ब्रह्मा च । ६. प्रतिबिम्बच्छलेन । ७. कैलासे ॥

अर्धार्धांशवियोजितं हि[1]ततमं पुण्यं कथंचिज्जितं
कायं किं[2] नु निनाय नीतिनिपुणा प्रत्येक[3]मैक्यप्रथाम् ॥५॥
यत्राप्यद्भुतनर्मणि प्रवितते स्वस्वापिधानात्मके
जात्वीशेन तिरोहितेऽतिचतुरं स्वस्मिन् विभूत्या[4] सिते ।
श्रान्ता तस्य[5] गवेषणेन सुचिरं किंस्वित्तदादीश्वरी
नाधांगाद्[6] वितनोति दूरममितप्रेमप्रसन्नं शिवम् ॥६॥
शम्भौ निश्चल[7]भक्तिसक्तमनसां तद्ध्यानधौतांहसां
कालेना[8]धिगतैतदीयविमलावेशप्रकाशश्रियाम् ।
पुण्यानां[9] परितोऽमितः समुदितः[10] पाश्चात्य[11] इन्दुद्युतिः[12]
शिष्टो[13] देह इवाविनाश[14]विषयस्तत्पत्तले[15] भाति यः ॥७॥
आव्यक्ते[16]र्द्विजराज[17] एष[18] नु तपः स्थाणू[19]परिस्थश्चरन्
संशिष्टः[20] कलया[21] यतः[22] स्मित[23]दृशा तुष्टादवापाद्भुतम् ।

---

१. अत एव अर्धाङ्गत्वात् हिततमम् । २. काका । ३. स्वस्य पत्युश्च । ४. भस्मना, ऐश्वर्येण च । ५. शिवस्य । ६. काका । ७. निश्चलं यथा स्यात् तथा भक्त्यासक्तमनसाम् । ८. ध्यानादिपरिपाककालेन । ९. पुण्यवताम् । १०. राशीभूतः । ११. पूर्वजन्मजः । १२. सित इत्यर्थः । १३. शेषीभूतो जीवं विहायेत्यर्थः । १४. अविनष्टः प्रभावात् । १५. शिवपादतले । १६. जन्मादितः । १७. चन्द्रो ब्राह्मणवरश्च । १८ ब्राह्मणपक्षे एष प्रसिद्धः, चन्द्रपक्षे सर्वानुभूतः । १९. शिवस्य स्थाणोश्च । २०. शेषीभूतः कृशश्च, सम्यक् शिष्टो विद्वानिति च । २१. एककलया किरीटकलया वरप्राप्तिचिन्तया च । ब्राह्मणपक्षे द्विजवरत्वादिकलया । २२. कैलासात्, ध्वनिना इष्टदेवात् च । २३. लक्षणया विकसनमेव दृक् वरदानाय दर्शनम्, स्मितवत् दृक् प्रकाश इति वा, स्मितेन सह दृक् दर्शनमिति च, महात्मनां सदा स्मितमुखानामपि वरदाने नितरां स्मितदर्शनात् ॥

नैर्मल्य[1]प्रचयं सुधामयनयं[2] सौन्दर्यसाराश्रय[3]-
मत्रा[4]मुष्मिकमालयं हिम[5]रुचां सर्वा[6]भिलाष्यं वरम् ॥८॥
यं वा सारसमुज्ज्वलं हिमगिरीशा[7]नान्नु मन्यामहे
हित्वा यत्प्र[9]भवं त[8]माढ्यविभवं र[10]त्नाकरं पार्वती ।
यद्वा[11]सस्पृहयेव कृत्तिवसनं भीमं हरं शूलिनं
गङ्गाक्रान्तपराङ्गमङ्गकलया देवी परा शिश्रिये ॥९॥
यो वा मेरुगिरीश्वराल्लघुतरोऽप्युच्चैस्तरां भासते
यत्त्वं सन्ततवासभूतममितं हित्वा सुराणां वराः ।
आयाता गिरिशावलोकनमि[12]षादस्मिं[13]स्थितास्तत्क्षणं
लोभा[14]र्ताः प्र[15]तियान्ति हीनतपसा संवासहीनाश्चिरम् ॥१०॥

---

१. सितत्वात् नैर्मल्यस्य मलराहित्यस्य प्रचयो राशिर्यस्य यस्मिन् यो वेति आरोपः । नैर्मल्यं आणवादिमलत्रयराहित्यम्, मलस्य अविद्याया राहित्यमेव प्रचयो महत्ता यस्य, तत उपरि कस्यापि महिमासम्भवात् 'तमेव विदित्वातिमृत्युमेति' 'तस्मिन् दृष्टे परावरे' 'यद्गत्वा न निवर्तन्ते' इत्यादिश्रुतेर्हिततमत्वादिश्रुतेश्च । २. ब्राह्मणपक्षे सुधामयोऽमृतमयो लक्षणया मुक्तिरूपो नयो ज्ञानम्, सुधया अमृतेन मुक्त्या आमयं संसाराख्यं नयति अपनयतीति वा । ३. सौन्दर्यस्य सौभाग्यस्य सार उत्कर्षस्तस्य आश्रय इति आरोपः, स एव आश्रयो यस्येति वा, सौन्दर्यस्य साराश्रयत्वमतिप्रियत्वात् च । ४. कर्मभूमौ । ५. शीतलप्रकाशानामालयमिति आरोपः । स्वयंप्रकाशमित्यर्थः । ६. चन्द्रस्य सर्वाह्लादकत्वात्, स्वात्मनः परानन्दसुधाब्धिस्वरूपत्वात् । ७. ईशानपदेन अन्यानि अनुक्तानि अपि अचलत्वादीनि विशेषणानि व्यज्यन्ते । ८. पितरम् । ९. पूर्वप्रकृतं प्रसिद्धम् । १०. रत्नानामाकर इति आरोपः, रत्नानामाकरः खनिर्वा यस्मिन् । ११. यस्मिन् कैलासे निवासकाङ्क्षयेव । १२. उत्प्रेक्षायाम् । १३. कैलासे । १४. चिरवासाय । १५. प्रतियाने कारणं तपसो हीनत्वम् ॥

आभाति सततं गिरीशशिरसि ज्वालाकुलस्याभितो
वह्नेराह्निक आह्निकः समुदितः[1] सर्गादितो[2]ऽलं[3] सितः ।
तेन[4]ारोहितशेषिनृत्तकलनाकालापतङ्गसना
संवीतः[5] किमु भस्मराशिरिव यो गङ्गाम्बुपिण्डीकृतः ॥११॥
बद्ध्वा वासुकिना[6] पिनाकधनुषा[7] शूलस्य[8] मूले गुरु-
ग्लावाग्रे[9] कलितेन जातु तुलितः पातालतालो[10]ऽभवत् ।
पूर्णो यः सततं च षोडशकलो यातोऽम्बरान्तं[11] लघुः[12]
संक्राम्यैक[13]कलाप्यु[14]पास्थितजटाजूटं श्रिता शाङ्करम् ॥१२॥
ब्रह्माणं परिलोक्य लोकरचनाचातुर्यरीतेः पतिं
संश्रित्या[15]त्र[16] हिमक्षमाधरवपुः सम्पन्न[17]सम्पद्गुणम् ।

---

१. एकीभूतः । २. सृष्ट्यादिकालतः । ३. नितरां धवलः पुण्यश्च । ४. ईश्वरेण । ५. संमिश्रितः । ६. करणभूतेन । ७. कर्तृभूतेन । ८. शूलस्य ऊर्ध्वमुखत्वेन मूल एव कैलासस्थितिसम्भवः । ९. अग्रे चन्द्रमसस्तच्छिरोगतत्वात्, चन्द्रस्य ग्लौरिति नामग्रहणं चन्द्रत्वादिगुणत्वेऽपि कैलासावूनत्वोत्प्रेक्षया 'ग्लै हर्षक्षये' इति धातोरर्थानुगमात् । १०. पातालमेव तालः प्रतिष्ठा प्रकृष्टस्थानम्, तस्मिन् वा प्रतिष्ठा यस्य । ११. आकाशपर्यन्तं निराधारत्वमिति; अम्बरशब्दस्य शून्यार्थे, अन्तस्य निश्चयार्थे च सम्भवात्, शून्यनिश्चयत्वं च । अथच शून्यनिश्चय इति अम्बरे शून्ये निश्चयमिति शून्ये एव तस्य एवंविधो निश्चयस्तुलार्थे जात इत्यर्थः । १२. हीनगुणद्योतकत्वमुत्तमगुणेन सह तुलारोपणात् च लघुत्वमप्रौढत्वं च । १३. एका असहाया च असौ कला नितरां हीनेत्यर्थः । १४. अपिशब्दः समुच्चयार्थे, उत्प्रेक्षायां वा, त्वर्थे च । १५. समर्थमाश्रित्य । १६. संसारे । १७. हिमक्षमाधरवपुः संश्रित्य ब्रह्माणं लोकरचनाचातुर्यरीतेः पतिम्, तस्यां समर्थं विलोक्य ब्रह्मणो हिमाचलवपुरवतारग्रहणेनैव सृष्टिशक्तिरित्यर्थः । अथ हिमक्षमाधरवपुः संश्रित्य ब्रह्माणं सम्पन्नसम्पद्गुणं

यद्रूपेण गिरीश्वरोऽपि[1] गिरिजा[2]धामप्रकामप्रभः
शम्भुः किं न्यवतीर्णवान् सु[3]विमलोद्दामप्रकाशश्रिया ॥१३॥
स्वर्धुन्या अपि यस्य किं गमितयोः सौन्दर्य[4]सारां तुलां
स्वस्मिन् दण्ड[5] इवातिगौरववपु[6]र्दुर्गर्वयोः शम्भुना ।
एकोऽगोऽङ्घ्रितले स्थितो गुरुरदोमूर्धा[7]श्रितान्या लघु-
र्लज्जालुः प्रविहाय तं च पतिता भूमौ[8] चला सम्भ्रमात् ॥१४॥
यः किं पार्श्वगयोर्विधूष्ण[9]करयोर्धाम्ना समं[10] वह्निना
नीरेणापि तदश्म[11]भूभ्य उदि[12]तेनाजस्रमुर्वीधरः ।

---

विलोक्य, ब्रह्माणं कथंभूतं लोकरचनाचातुर्यरीतेः पतिमिति योज्यम्, लोकरचनाचातुर्यरीतेः पत्युरपि ब्रह्मणो हिमाचलवपुर्ग्रहणेनैव सम्पन्न-सम्पद्गुणत्वमिति ॥

१. गिरीश्वर इति श्लेषेण शिवस्य अपि गिरिराजकैलासरूपत्वम्, तत एव शिवस्य कैलासावतारसिद्धिः । २. गिरिजातेजसा गिरिजा-स्थानेन वा प्रकृष्टशोभः, यतो गिरिजायाः स्थानं शिवस्तस्मादर्थच्छलेन स्वयमपि गिरीश्वरः । ३. यद्रूपेण कीदृशेन, सुविमला उद्दामा च प्रकाशश्रीरस्य तेनेति; यद्रूपेण कीदृशेन, उपलक्षितेनेति वा सुविमला च असौ उद्दामा, सा च प्रकाशश्रीस्तयेत्यर्थः । ४. सौन्दर्यस्य सार उत्कर्षो यस्याम्, सौन्दर्यमेव बलं यस्यां वा; सारशब्द उत्कर्षे पुँल्लिङ्गः । ५. दण्डरूपे महादेववपुषि । ६. उभयोः कथंभूतयोर्गौरववपुषा दुर्गर्वयोः । ७. अमुष्य शिवस्य मूर्धाश्रितेति कैलासस्य पादस्थित्या शिवसन्निकृष्टत्वम्, गङ्गायाश्च मूर्धगतत्वात् तदनवलोकेन अमुष्येति विप्रकृष्टार्थत्वम् । ८. भूरिस्थानगमनेन च सम्भ्रमः । ९. सूर्य-चन्द्रयोः । १०. युगपत् । यथा शिवस्य शिरसि वह्निनीरमयी कला वर्तते, तथा मम कैलासस्य अपीत्यर्थः । ११. सूर्यचन्द्रकान्तो-पलभूमिभ्यः । १२. वह्निना नीरेण च कथंभूतेन, उदितेन उत्पन्नेन ॥

श्रीशम्भोः शिरसः कलां चरणयोर्यातोऽप्यहो सर्वदा
लोकानां परिदर्शयत्यतिचमत्कारैकसारोद्धुराम् ॥१५॥
[1]यत्राप्यप्सरसो गिरीन्द्रतनयासन्दर्शनायागता-
[2]स्तद्रूपं [3]प्रतिरूपितं [4]सुविमले [5]संलोक्य [6]लोकोत्तरम् ।
अर्धाङ्गेशतया युतं [7]परिगतव्रीडास्त्वरात्यातुरा
एवातः प्रतियान्ति [8]पूर्णकलना मुग्धाः [9]स्वधामाश्रमान् ॥१६॥
सूर्येन्दुप्रतिबिम्बनिस्सरदतिव्याप्तप्रकाशोदया
[10]यत्राहो अपि [11]दूरमध्यविषया दीर्घा गुहाः [12]संश्रिताः ।
सम्यक् [13]स्वासनतां गते [14]पशुपतेर्नित्यं तमोभागिनो
ज्ञातुं [15]सान्तमसीं कलां न वशिनस्[16]तान्तिप्रदां [17]जातुचित् ॥१७॥
[18]स्वालंकारवरस्थितेषु मणिषु [19]प्रौढोज्ज्वलद्रश्मिषु
यत्राप्यप्सरसः परस्परमलं मुग्धाः [20]प्रतिच्छायताम् ।

---

१. कैलासे । २. तयोः शिवशक्त्योः । ३. प्रतिबिम्बितम् । ४. निर्मले । ५. दृष्ट्वा । ६. अर्धनारीश्वरत्वात्, अलौकिकत्वात्, उत्तमत्वात् चेत्यर्थः । ७. स्त्रीरूपदर्शनार्थमेव आगताः पुरुषरूपस्य अपि दर्शनेन प्राप्तलज्जाः, अत एव तुरया अत्यातुराः । ८. तत्रैव स्त्रीरूपपार्वतीदर्शनेन सम्पूर्णवासनाः, सम्पूर्णकलनायां वा मुग्धाः । ९. स्वमेव सूर्याद्यनपेक्षं धाम तेजो येषां तद्रूपानाश्रमानित्यर्थः । १०. कैलासे । ११. यतो दीर्घा अत एव दूरमार्गयुतमध्यस्थानाः । १२. आश्रिता भक्तजनाश्च । १३. अन्यासाधारणासनताम् । १४. षष्ठी । १५. अन्धकारमयीमज्ञानरूपां च । १६. म्लानिप्रदाम् । १७. कदाचित् । १८. स्वे च तेऽलङ्कारवराः, सुष्ठु आ समन्तात् सर्वाङ्गेषु वा अलङ्कारवरास्तत्र स्थितेषु । १९. प्रौढं यथा स्यात्तथा, प्रौढा वा उज्ज्वलन्तश्च रश्मयो येषु येषां वा । २०. प्रतिबिम्बताम् ॥

यातेष्वप्युभयेषु सद्यउदयद्वैशद्यहृद्येषु नो
नो यान्ति प्रसभं सभाहसकृतः श्वेतान्यवर्णभ्रमम् ॥१८॥
छायासङ्क्रमतोऽवदातविततामोगेऽन्तरा मानसे
स्वीयांघ्रिस्थितिभाजि राजिसहजप्राज्यप्रवाहे बहिः।
भक्तानां परिदर्शयत्यकलुषां तां ध्यानतो मानसे
सद्यःशुद्धिकरीं कलां हिततमामागामिनीं यो नवाम् ॥१९॥
तस्यैकत्र विचित्ररत्नविलसन्मूर्तौ सुसानावभू-
दासीनः सनकादिवन्दितपदद्वन्द्वो महेशो हरः।

१. अपिश्चार्थे। २. सद्यउदयद्वैशद्या अत एव हृद्याश्च, सद्यउदयद्वैशद्येन वा हृद्याः। ३. अपितु यान्ति। ४. सभाया लक्षणया तत्रस्थानां हासजनयित्र्यः। ५. श्वेतवर्णाश्च अन्यवर्णाश्च, तेषां तेषु वा भ्रान्तिं विपर्ययमिति यावत्। ६. छायाप्रतिबिम्बतः। ७. मानसह्रदे। ८. कैलासाङ्घ्रिस्थितिसेवके। ९. शोभननैसर्गिकोत्कृष्टप्रवाहे। १०. निष्पापामज्ञानरहितां च। ११. यथा कैलासपादस्थितस्य मानससरोवरस्य सद्यःशुद्धिकरी कला भूता, तथा कैलासध्यानतोऽपि भक्तानां सद्यःशुद्धिकरी कला भवतीति भावः। १२. आगन्तुकां समन्ताद्गामिनीं वा। १३. एकस्मिन्नद्वितीये। १४. सर्वस्य कैलासस्य महेशपीठत्वेऽपि पीठप्राधान्यार्थं विचित्रेत्यादि विशेषणम्। १५. तस्मिन् एव सानौ नान्दिनामाविर्भावात् सुशब्दोपादानम्। १६. सनकादिभिर्वन्दितं पदद्वन्द्वम् 'पद गतौ' इति धातोरर्थानुगमात् 'सर्वे गत्यर्था ज्ञानार्थाः' इत्युक्त्या ज्ञानद्वन्द्वं भुक्तिमुक्तिरूपम्, शाक्तशाम्भवरूपं वा, योगसांख्योक्तं पिपीलिकाविहङ्गमार्गात्मकं वा, हठराजयोगात्मकं वा, आत्मपरमात्ममयं वा यस्येति। अथवा सनकादिवन्दितपत्, अद्वन्द्व इति पदद्वयम्। पूर्ववदेव अर्थः पूर्वपदे, अपरपदेऽद्वन्द्वो द्वन्द्वरहितो द्वितीयरहितो वा। अथवा स महेश इति योज्यम्। नेति काका। कादिवन्दितपदद्वन्द्वो ब्रह्मादिवन्दितपदद्वन्द्वः। निष्कामानामपि

देवेशाः[1] समुपासते[2] भवभवाभूत्यै[3] पुनर्यं भवं
भावाभावविभावनातिविभवं[4] देवाधिदेवं[5] नवैः[6] ॥२०॥
हित्वा कारणकार्यगौरवकथां[7] स्वाच्छन्द्यस्वस्पन्दवित्-
सान्द्रानन्दसुधाम्बुधिर्निरुपधिः[10] कर्तुं[11] न कर्तुं तथा ।

---

सनकादीनां पदवन्दनेन अतिमहिमा व्यज्यते । विनिर्मुक्तानां सनकादीनां तत्र स्थितिः 'भुक्तिमुक्तिफलप्रदम्' इत्यादिवक्ष्यमाणदृशा मुक्तिश्रवणार्थमेव, आदिपदेन अन्येषामपि सर्वेषां देवेशानां तत्र स्थितिः । १७. महांश्च असावीशश्च, महतां शक्रादीनां वा ईशः । १८. हरति जगदिति हरः, हरति सर्वमिदं स्वनिमेषरूपं करोति च ॥

१. विष्णुमुख्याः, जितेन्द्रिया वा । २. समीपे आसते, सम्यक् भजन्ते वा । ३. भवे संसारे भवो जन्म स्वाहन्ताभिमननं तस्य अभूतिरभवो विनाशोऽनाकलनमिति यावत्, तस्यै । ४. भावाश्च अभावाश्च, तेषां परस्परं विरुद्धा भावना प्रकटना वा, तया अतिशयितो विभवो यस्य, अथवा भवोऽहन्तास्वरूपः, अभाव इदन्तालक्षणस्तयोर्या विशेषभावना विपरीतभावना वा तामतिक्रान्तो विभव ऐश्वर्यं विशेषसत्ता च यस्य । ५. देवानां त्रिदशानामधिदेवम् । ६. परमप्रकाशविमर्शमयपराहन्ताविश्रामाविर्भावस्वरूपैः स्तोत्रैः । ७. कारणं च कार्यं च तयोस्ते एव वा गौरवं तस्य कथां प्रबन्धमिति सांख्यन्यायादिपरिहारः, पूर्वारब्ध एव अर्थो ब्रह्माद्वयशिवाद्वयदृशि । तां वितनोति हित्वेत्यादि । यदुक्तं

'कार्यकारणताद्यस्मिन् संविन्मात्रात्मके तते ।
मार्गयन्त्यप्रबोधाद्ये तैर्मृगैरलमस्तु नः ॥'

इति । यच्छ्रुतिः—

'नैषा तर्केण मतिरापनीया प्रोक्तानेनैव सुज्ञानाय प्रेष्या ।'
'कोऽद्धा वेद क इह प्रवोचदियं विसृष्टिर्यत आबभूव ॥'

इति । एवं स्मृतिश्च—

'अचिन्त्या खलु ये भावा न तांस्तर्केण योजयेत् ।' इति

ईष्टे व्यत्ययतोऽपि दुर्विधभिदाभेदप्रथासिद्धिदः
　सिद्धास्वाद्यनिराद्यबोधविभवो बाधावधिर्यः परः ॥२१॥
यस्यैकस्य विशेषवेशबहुला मूर्त्यः स्फुरन्त्यः स्फुटं
　दृश्यन्ते विशदाननातिशयितांभोजप्रभात्यादराः ।

---

'न मे विदुः सुरगणाः.............. ।' इति ।

८. अभेदे भेदनं भेदिते च अन्तरनुसन्धानेन अभेदनमिति स्वातन्त्र्यं स्वाच्छन्द्यम्, तस्य तेन वा यः स्वस्पन्दस्तं वेत्ति, अथवा स्वाच्छन्द्यस्वस्पन्दवित्सान्द्रानन्दसुधाम्बुधिरिति एकमेव पदम्, स्वाच्छन्द्यं च स्वस्पन्दश्च विच्च सान्द्रानन्दश्च सुधा च तासामम्बुधिरिव अम्बुधिः, स्वाच्छन्द्येन चिच्छक्तिः, स्वस्पन्देन क्रिया, विदा ज्ञानम्, सान्द्रानन्देन आनन्दशक्तिः, सुधया सुष्ठु धारणमिति कृत्वा इच्छाशक्तिर्लक्ष्यते, पञ्चशक्तिमय इति भावः । ९. परानन्दसुधासमुद्रः । १०. उप समीपे धीयते स्थीयतेऽनया कर्तृभूतयेति उपधिर्महामाया, तस्या निष्क्रान्तः; अथवा उप समीपे धीयते स्थीयतेऽनेनेति उपधिर्जीवः, निःशेषेण उपधिर्जीवो यस्येति, जीवः स्वात्मभूतो यस्येति निःशेषत्वम्, अथवा जीवाभिमाननिष्क्रान्तः । ११. पञ्चकृत्यकारी ॥

१. दुर्विधा दुष्प्रयोज्या दुर्वेध्या च असौ भिदा, तस्या या भेदप्रथा; तया सैव वा सिद्धिर्वृत्तिस्तां ददातीति । अथ च दुर्विधभिदा मायाशक्त्या भेदप्रथासिद्धिस्तां द्यति खण्डयतीति । २. सिद्धैः स्वात्मानुभावकैरा समन्तात् स्वाद्यश्चर्व्यो निराद्य आदिरहितो बोध एव विभवो यस्येति, अथवा सिद्धो नतु साध्य आ समन्तात् व्यापकः, सुष्ठु आद्यः स्वेन आद्यो वा यो बोधस्तेन विभवति व्याप्नोति विशेषेण भवतीति च । ३. बाधावधिरनन्तो निर्विनाशो विनाशस्य अपि विनाशो यस्मिन्निति, नतु तस्य केनापि विनाशः कर्तुं युज्यते अनाश्रितत्वात् निर्भागत्वात् स्वतन्त्रत्वादिति च । ४. वेशास्त्रिनेत्रपञ्चमुखादयस्तैर्बहुलाः, अत एव वा बहुलाः । ५. भैरवश्रीकण्ठाद्याः । ६. निर्मलमुखैरतिशायितोऽम्भोजप्रभासु अत्यादरो याभिः, अथवा

वारं वारमुदञ्चिताञ्चितदृशा चित्तान्धकारोत्करं
वीराणां विनिवारयन्त्य इनदुर्वारं विकाराकरम् ॥२२॥
देवा देववरं नमन्ति दितिजा दैत्येश्वरं नेतरं
स्पर्धान्योन्यनिबद्धवध्यकलनानिर्बन्धबन्धोद्धुराः ।
यं तु स्वैक्यविलासलास्यचतुरं सर्वोत्तरं शङ्करं
सर्वेऽप्यस्तभया इवेक्षितहितद्वन्द्वैकदेहाश्रयाः ॥२३॥
मूर्ध्नो देवनदी वहत्यविरतं यस्य प्रशस्यप्रथा
व्याप्तव्योमधरान्तरालजलधिः पातालतालामला ।
उग्रं भीममपि प्रसादविशदं विद्याब्धिशीतद्युतिं
लोकानामिव वक्तुमुक्तिविलसत्तारङ्गरङ्गध्वनिः ॥२४॥
आदावेकरसेन येन विधृताभ्यन्तः पुनः पार्वती-
प्रेम्णा पूर्णतरेण संस्थितवता सम्बाधदेशस्थिता ।
कल्लोलाभिलसद्विलोलकलहालापा श्रमोदाकुला
निर्याता बहिरिङ्गितातिचतुरा गङ्गामलाङ्गी किमु ॥२५॥

---

विषखण्डनमुखैरतिशयितोऽम्भोजानां प्रभा यस्मात् सूर्यात् तस्मिन् वा अत्यादरो याभिः ॥

१. उदञ्चिता ऊर्ध्वमुत्थापिता च असावञ्चिता नामिता च असौ दृक् दृष्टिस्तया, उदञ्चिता विकासिता अत एव अञ्चिता पूजिता च या दृक् ज्ञानं, तया । २. चित्तस्य अन्धकारो लक्षणया अज्ञानं संकल्पविकल्पात्मकं तस्य उत्करम् । ३. सूर्यदुर्वारम् । ४. सर्वभावेषु स्वात्मभावैक्यविलास एव लास्यं तस्मिंश्चतुरम् । ५. द्वन्द्वानामेकस्मिन् देहे आश्रयो द्वन्द्वैकदेहाश्रयः, स च असौ हितश्च ईक्षितो यैरेतादृशाः सन्तोऽत अस्तभया इव । ६. उक्तिरेव तद्वत् वा विलसंस्तारङ्गरङ्गध्व-नियस्याः, तरङ्गानां समूहस्तारङ्गं तदेव रङ्गं तस्य ध्वनिरुद्भटशब्दः ।

यज्ज्वालाग्निविलोलकीलविगलत्पीयूषदेहाकलः[1]
कोट्युत्कूट[2]जटाकटाहकतटे सूनुर्जलानां निधेः ।
सन्न्यस्या[3]त्मजकेवलामलकलां राजा प्रजारञ्जनः
किंस्विद्याति तदादि नैव सकलस्तन्मस्तकं शंकितः ॥२६॥
तुष्टिं पुष्टिमपि प्रकृष्ट[5]विलसत्संघर्षयोरेककां
निर्मातुं[6] जगतां समु[7]द्यतवतोः स्वर्गापगाया मिथः[8] ।
भालाग्नेरपि वारणाकृतिकपर्दान्तर्गता कीलव-
च्चान्द्री[9] सान्द्रकला विभाति ललिता यन्मूर्ध्नि[10] किं शान्तिकृत्[11] ॥
आभोगा[12]कृतिबद्धसंस्फुटजटाजूटाम्बराढ्यप्रथं
गङ्गो[13]त्तुङ्गतरङ्गरङ्गविततविश्रान्तवातातातम् ।

---

७. संकटदेशस्थिता । ८. अधुना बहिर्यानमेव युक्तमितीङ्गिते नितरां निपुणेत्यर्थः ॥

१. क्षीणः । २. कोटिषु अन्तेषु उत्कूटा उच्छिखरा च असौ जटा एव कटाहकं तस्य तटं तस्मिन् । ३. स्थापयित्वा । ४. यत्र सम्पूर्ण-चन्द्रस्य विगलितत्वाशङ्कया पुनर्न गमनं तत्रैव शिवकिरीटकलाया निरुपद्रवं सुस्थित्या केवलत्वमद्वितीयत्वमलौकिकत्वं चेति यावत् । ५. प्रकृष्टविलसतोः संघर्षयोरत एव जगतां स्थावरजङ्गमानां तदाधार-भूतानां त्रिजगतां वा एककां, तुष्टिरहितां पुष्टिं पुष्टिरहितां च तुष्टिम् । ६. विधातुम् । ७. उभयोरिति अध्याहारः । ८. अन्योन्यम् । ९. अत एव अन्यचन्द्रकलाभ्योऽपि ललिता । १०. हरशिरसि । ११. युद्ध-शान्तिकारिणी । १२. आभोगाकृत्या मण्डलाकारेण सन्नद्धो बद्धश्च असौ संस्फुटश्च जटाजूटस्तत्र तस्य वा यदम्बरं सुषिरं स्थानं तस्य आढ्या प्रथा यस्मिंस्तत् आ समन्तात् भोगाकृत्या सर्पशरीराकृत्या बद्धो व्याप्तः संस्फुटश्च यो जटाजूटस्तत्र अम्बरस्य आढ्या प्रथा यस्मिंस्तद्वा । १३. गङ्गाया उत्तुङ्गा ये तरङ्गास्तेषां रङ्गः, विततश्च असौ

तत्[1]स्रोतःप्लुतमीक्षणाग्निविलसज्ज्वालं च भाल[2]स्थली-
संशालं किल यच्छिरः प्र[3]कटितस्वान्तःस्थभूतव्रजम् ॥२८॥
उष्णा[4]न्ये तपसी तपन् समम[5]हो अङ्कोज्झितः सन् विधु-
[6]ग्लौत्वं शीतकरत्वमाप च सदा[7]भ्यासात्[8]कलाव्यासवान् ।
यस्योर्ध्वे किमु त[9]त्तनोति वि[10]रहग्रस्तान्तरेकं[11] ययो-
रन्यस्मिन् स्वविलासभासि तरसा सारोत्तरं वा[12]परम् ॥२९॥
य[13]द्भाले परितोऽतिभूतिरचनाशुक्ले विशालस्थले
वह्निर्भातितमां तमोविदलनव्यालोलकीलाकुलः ।
वर्षान्तप्रकृतर्तुकार्जविग[14]लन्नीरामलाभ्रेऽम्बरे
म[15]ध्यप्रोद्यदिवापिधानरहितं बा[16]लार्कबिम्बं महत् ॥३०॥

---

अविश्रान्तश्च वा यो वातो वायुस्तेन आततं व्याप्तम् ॥

१. आकाशवाय्वोरनन्तरं तेजस एव लक्षणोपयोग्यत्वेऽपि जलस्य लक्षणं तत्स्रोत इति तस्या गङ्गाया परामर्शार्थं विपरीतत्वेऽपि न अनुचितम्, तस्या गङ्गायाः स्रोतसा व्याप्तम् । २. भालस्य स्थली एव स्थली पृथिवी विततत्वात् । ३. प्रकटिता निजान्तर्गता भूतानां पञ्चमहाभूतानां व्रजाः समूहा येन, तेषामेकत्र उपलक्षितत्वात् समूहत्वम् । ४. पञ्चाग्निशीते तपसी । ५. उभयोस्तपसोर्युगपच्चरणात् अहो इति । ६. 'ग्लै हर्षक्षये' इति धातोरर्थानुगमनात् हर्षराहित्यम् । ७. सदा निकटस्थित्या परिचयेन च । ८. तत्र एककलया तपश्चरणादिव कलानां विस्तरेण युतः । ९. तस्मात् कारणात् । १०. कुत्र । विरहेण ग्रस्ता ये पुरुषास्तदन्तस्तन्मनस्तस्मिन्, विरहग्रस्तमनसि । ११. ग्लौत्वम् । १२. पूर्णं शीतकरत्वम् । १३. शिवललाटे । १४. शरदृतौ विगलन्नीराणि अत एव अमलानि अभ्राणि यस्मिन् । १५. अभ्रेभ्य आकाशमध्ये स्थगितं सत् मुक्तम् । १६. तारुण्यादियुतस्य अपि अर्कबिम्बस्य तत्क्षणमभ्रच्छादनापगमात् बालत्वमिव ॥

यच्छीर्षस्थितगाङ्गवारिनिकटे संवासतोऽभ्यासवान्
भालाग्निः सुविशालतालविलसज्ज्वालामलः किं पुनः ।
संप्राप्यावतरं तरङ्गततिभिः कोपाकुलं वान्तरा
यातः संज्वलयत्यलं जलनिधिं सोऽयं दृढं वाडवम् ॥३१॥
ज्योतीरूपमरूपमाढ्यधिषणारूप्यं शरीरं शिरो-
वह्निव्याजतया विराजत इलालालित्यतालातुलम् ।
ईशस्याप्यनिशं भृशं ज्वलनतः शिष्टोऽकृशो भस्मनो
राशिर्यस्य सितस्तदन्त इव किं देहोऽपरः कल्पितः ॥३२॥
सप्तार्चिर्जयति प्रसिद्धमहिमा यस्योत्तमाङ्गेऽनघे
यः कामं च यमं शमं समनयत् तूर्णं निकामाधमौ ।
यावाङ्गैकवशंवदं नियतितः कं कं न मूर्च्छां ततो
मृत्युं वा नयतो नयं च विनयं सम्यक् श्रितं वानयौ ॥३३॥
ऊर्ध्वाङ्गे परितो विभान्ति विततः पिङ्गा जटा यस्य वा
वह्निं साचिगणमाकलय्य विहितस्याब्रह्मपर्णावधि ।
संहारस्य दुरुद्धरस्य जगतां भूयः स्वयं भूरिशः
प्रत्येकं गणनाय साधुरचिताः स्वर्णस्य रेखा इव ॥३४॥

---

१. सम्यक् च असौ वासो निवासस्ततः । २. सुविस्तीर्णाश्च तालाश्च विलसन्त्यश्च ज्वालास्ताभिरमलः । ३. वाडवमवतारम् । ४. जलनिधिं कीदृशम् । तरङ्गततिभिः कोपाकुलम् । ५. व इवार्थे । ६. आढ्या च असौ धिषणा तया रूप्यं निरूप्यम्, आढ्या धिषणा येषां तैः समन्तात् निरूप्यं च । ७. शोभालालित्यप्रतिष्ठया अतुलम् । ८. ज्योतीरूपशरीरान्ते । ९. अग्निः । १०. मूर्च्छानन्तरम् । ११. पुरुषं कीदृशम् । नयं विनयं च सम्यक् श्रितम् । १२. शिरसि । १३. ब्रह्मादितृणान्तम् ॥

यस्यारालविशालपालि[1]युगलं नीरन्ध्रवालाकुलं
किंचिद्दग्धमिवा[2]वशिष्टमतनो[3]ः संलुण्ठितं कार्मुकम् ।
द्वैधीभूतमतीव सर्वजयजात् तोषादूधृतं नेत्रयो-
रूर्ध्वे यत्सममुद्यतं न[4]हि भियेऽभक्तस्य भक्तस्य वा ॥३५॥

तन्नेत्रत्रितयं त्रिधामविषयं सौन्दर्यसाराश्रयं
सूते दक्षिणतो दिनं सममहो[5] ज्यौत्स्नीं निशां वामतः ।
सन्ध्यां सन्धिगतां तयोरपि तमोभाजोऽपि य[6]स्यानिशं
यद्दृष्टौ पतितस्य नैव पतति च्छाया तमोभावजा ॥३६॥

सव्यं यन्नयनं नयत्यय[7]नयं सद्भक्तवक्त्राम्बुजं
त[8]न्नेत्रोत्पलमन्यदप्यतिचमत्कारां विकासश्रियम् ।
भालस्थं ज्वलयत्यलं च विलसद्द्वैतेन्धनं यत् त्रिधा
काले भावविरुद्धमप्युपकृतावन्य[9]स्य शान्तं मिथ[10]ः ॥३७॥

यन्नेत्रोर्ध्वगते भ्रुवावपि जटाजूटोऽपि भा[11]न्ति स्फुटं
प्रत्येकं निजभागजं नु[12] विजितं ब[13]न्दीकृतं धा[14]मभिः ।
त्रैधं दुस्ति[15]मिरं कृपाकुलतया द्वा[16]भ्यां तथा स्थापितं
दग्ध्वा[17]र्धं क[18]पिशीकृतं दृढरुषेवान्येन[19] दुष्टप्रथम् ॥३८॥

---

१. भ्रूयुगलम् । २. किञ्चित् दाहात् शिष्टम् । ३. कामस्य । ४. अभक्तस्य नहि भियेऽपितु भिये एव; भक्तस्य हि निश्चयेन भिये न, किन्तु अभिये इत्यर्थः । ५. युगपत् दिननिशयोः प्रसवात् अहो इति । ६. ईश्वरस्य । ७. अयस्य ज्ञानस्य शुभविधेश्च नीतिमार्गस्तम् । ८. तेषां भक्तानां नेत्रोत्पलम् । ९. भक्तस्य । १०. अन्योन्यं रहसि च । ११. एतानि वस्तूनि । १२. उत्प्रेक्षायाम् । १३. कारागृहे स्थापितम् । १४. सूर्यचन्द्राग्निभिः । १५. दुष्टान्धकारम् । १६. सूर्यचन्द्राभ्याम् । १७. अर्धं दग्ध्वा कृष्णीकृतमेव स्थापितम् । १८. भ्रुवोः कृष्णरूपत्वात्

यन्नेत्राणि पवित्रचित्रविलसद्धामानि का[1]म्यप्रथा-
वन्ति ध्वान्तनितान्ततान्तिदलने निर्बन्ध[2]वन्ति स्वतः ।
लीला[3]शीलनसंनिबद्धरचनाभाजां त्रयाणां बहि-
र्लोकानामिव लिङ्गदेहकलनाज्योतिर्विशेषाः पृथक् ॥३९॥

कर्णाभ्यर्णगते सुवर्णविशदे निष्कोचने लोचने
यस्यालोक्य विलोकनीयविततप्राज्यप्रकाशाञ्चिते ।
दीर्घं संचितघस्ररात्रिप[4]तितासम्यक्फले निस्तुले
भालस्थं नयनं ज्व[5]लत्यतिरुषा किं न्यूनसन्ध्या[6]प्रभुः ॥४०॥

दृष्टा दृष्टिरभीष्ट[7]दा कृतधिया यस्याभिया सत्क्रिया
येना[8]दृष्टविनष्टिदिष्ट इह तं स्प्रष्टुं न जातु क्षमम् ।
दृश्यो[9]घप्रविविक्तदृष्टिविषयं दृष्ट्य[10]न्तरं विस्तरा-
च्छिष्टंमन्यै[11]निकृष्टदृष्टिभि[12]रुपादिष्टं विनष्टिप्रथम् ॥४१॥

---

जटानां कपिलरूपत्वात् चेयं सम्भावना । १९. अग्निना ॥

१. काङ्क्षणीयप्रथायुक्तानि त्यक्तविरोधत्वात् । २. हेवाकयुक्तानि । ३. लीलया शीलनमभ्यासस्तेन संनिबद्धा च असौ रचना तां भजताम् । ४. अर्जितदिनरात्रिस्वामित्वसत्फले, पत्युर्भावः पतिता, पतिता एव सम्यक् फलम् । ५. अग्निः । ६. स्वल्पकालस्थसन्ध्यापतेरारोपः । ७. अभीष्टः सर्वतो हितः स्वात्मा, तं ददाति प्रत्यभिज्ञापयति । ८. अदृष्टं धर्माधर्मौ तयोर्विनष्टिर्विनाशस्तस्य दिष्टं समयस्तस्मिन्, यदा धर्माधर्मरहितः पुरुषो भवति तदा तद्दर्शनं प्राप्यते, तदा तद्दृष्टौ पतति वा । ९. आद्यशब्देन द्रष्टृदर्शनयोर्ग्रहणम्, दृश्याद्येन विविधीकृतम् । १०. शिवदर्शनादन्यत् दर्शनम् । ११. पण्डितंमन्याश्च निकृष्टदृष्टयः सांख्यचार्वाकादयस्तैः । १२. उप समीपं स्वात्माभिमानित्वेन, उप समीपं देहादिषु स्वात्माभिमानित्वेन आज्ञप्तम् ॥

श्रोतव्यस्य तथा श्रुतस्य परमां सीमानमभ्युद्यतः[1]
श्रोत्रे यस्य निरर्थतामुपगते पूर्वं[2] श्रुतीशानताम्[3] ।
यातस्याथ[4] सविभ्रमोद्गतवतो देवीमुखाम्भोधितः
पानार्थाय रसालपस्य जयतः पात्रे पवित्रे इव ॥४२॥

यन्नासा न न सा प्रशान्तसुधियां भक्त्येकदृश्यान्तरी
वेदिः प्राणकलादियज्ञविधये भाति स्फुटं भ्रूयुता ।
यद्धाम[5]त्रितयं श्रवः[6]कलशयुक् ताप[7]पापहारिप्रथं
चित्रं पूर्णतमप्रशंसममलं[8] मेया[9]हुतिं प्लुष्यति[10] ॥४३॥

यन्नासा विलसत्त्रिकोणरचना द्वाभ्यां पुटाभ्यां युता
भस्मोद्धूलितगण्डमण्डलवलद्भूमिप्रभाभास्वरा ।
तद्धाम्नां[11] प्रतिबिम्बितातिविमलाकारा स्थितिर्निर्मित-
स्थैर्याणामिव लोचनेषु सुलभ[12]प्रत्येकबिम्बोपमा ॥४४॥

यन्नासा नयनद्वयाभिललिता भ्रूरेखिणी भासते
चुल्ली यन्त्रमयीव वायुमनिशं सम्पूर्य तन्मध्यतः ।
सन्दीप्याक्ष्यनलं जटातटकटाहान्तः सनीरे ज्वरः
पक्वस्यामृत[13]खण्डकस्य भवजः स्पर्शाद्यदेति क्षयम् ॥४५॥

---

१. उल्लङ्घ्य गच्छतः । २. आदौ । ३. वेदेश्वरत्वं यातस्य वेदानां तन्निःश्वासरूपत्वात् । ४. तदनन्तरम् । ५. नेत्रत्रयवर्तमानम् । ६. श्रवणघटसहितम् । ७. तापत्रयहारिणी प्रथा यस्य, यज्ञादिकं तापापहरणाय एव चरन्ति । ८. अमं रोगं लातीति अमलं संसाराख्य-रोगखण्डनं निर्मलं वा । ९. पदार्था एव आहुतिस्ताम् । १०. स्वात्म-सात्करोति । ११. शिवधाम्नाम्, तानि धामानि नेत्रत्रयादीनि तेषामिति वा । १२. चन्द्रसूर्ययोर्गण्डमण्डलवर्तुलप्रतिबिम्बः, अग्नेश्च त्रिकोणनासाप्रतिबिम्बः । १३. अमृतखण्ड एव खण्डकश्चन्द्रः,

चित्तं कस्य न गण्डमण्डलमलं संवर्तुलं निर्मलं
भूत्याप्युल्लसितं हरत्यपि चलं भक्त्या यदीयं स्फुटम् ।
नासामेरुगिरेरुपान्तचरयोः सूर्यौषधीशानयो-
र्भूमावातपचन्द्रिके इव पुरोभागे पतन्त्यौ मिथः ॥४६॥

नासाश्वासभवोऽपि यस्य विभवः सौगन्ध्यवन्ध्येतरः
शस्यः कस्य न चम्पकावयविनी यल्लब्धये पार्वती ।
पद्मास्योत्पललोचना तिलनसा गण्डप्रभादाडिमी
बिम्बोष्ठी परिचारुकुन्ददशनापर्णा चचार व्रतम् ॥४७॥

सारासाररसासवाभिरसने दत्तौ च यस्याधरौ
भास्वन्मध्यमरेखया विलसितौ यातौ चतुष्टां स्फुटम् ।
नेत्रोर्ध्वाङ्गजुषां भृशाकृशतृषां धाम्नां चतुर्णामिव
तेजःपुष्पविकासनाय सरणीमूलाद्विभक्तुं रसम् ॥४८॥

यद्वाचं विमलां विशालतलिना स्तोतुं हि कस्यास्ति वाक्
तादृग्यच्चतुराननैरपि चतुर्वेदीमधीते परम् ।
धातापि द्विसहस्रगीः परिमितां शब्दस्मृतिं केवलां
शेषः सा स तु वक्ति तन्त्रजचतुःषष्टिं स्वतन्त्रं च तत् ॥४९॥

---

अमृताया गुडूच्या अयम्, आमृतश्च असौ खण्डकश्च ॥

१. नासा एव मेरुगिरिस्तस्य । २. गण्डमण्डलं किमिव, आतपचन्द्रिके इव । ३. तपःसमये पत्राणामपि भक्षणत्यागादपर्णा पर्णरहिता, सर्वपुष्पमयी च अपर्णा । ४. सारेण असारभूतश्च असौ रसः, स एव आसवस्तस्य अभिरसनमास्वादनं तस्मिन्, सारश्च असारश्च, तयोः रसः; स एव आसवस्तस्य अभिरसने । ५. चतुर्णां भावश्चतुष्टा, ताम् । ६. लोचनललाटजुषाम् । ७. तन्त्रराजम् ॥

वाणी यस्य न कस्य भाति हृदि सा भासेत चेत्तर्हि किं
स्वाज्ञानावृतचेतना अतिरसं कुर्युः श्रुतानां गिराम् ।
यत्ता बोधयितुं क्षमा न कृतिनः स्वं बोधमत्यद्भुतं
तस्यास्तु क्षणतो भवत्यपि रसान्निर्बोधबोधोदयः ॥५०॥

वाणी यस्य च सैव मय्यविरतं विश्रान्तिमात्यन्तिकीं
नायाता किमु सत्प्रसादमधुरोद्गारप्रभावप्रथा ।
यत्तत्स्वादनतो विमर्शपरमः कश्मीरबालोऽप्यहं
जात्या निग्रहमानयामि विततास्ता गीर्पतीनां गिरः ॥५१॥

वाणी यस्य न शास्ति शासनकलामाशास्यसंशासिनी-
मिन्द्रोपेन्द्रविधातृशासनलसत्त्रासप्रवासप्रदाम् ।
यस्यां स्वासनतः प्रफुल्लविमलाश्वास्यप्रशस्यश्रियां
नानाशासनशासनादिगणना यान्तीह हास्यप्रथाम् ॥५२॥

वेदांस्तान् स्फुटतां निनाय च न गीः साक्षादुपायत्रयी-
भङ्ग्यानङ्गहरस्य यस्य विततैरङ्गैर्विना निष्प्रभान् ।
चत्वारोऽपि च ते यदेकविषयां विद्यां परां तां शिवां
निर्णेतुं पुनरापतन्ति पतिता उक्त्वापि वादान् बहून् ॥५३॥

वाणीं यस्य महाप्रसादविशदां सम्यक् त्रयी सा त्रिभि-
र्नोपास्ते चरणैर्गता गतिमतां गम्याभिरम्यप्रथा ।
अङ्गैः षड्भिरुपार्जितार्जितवती याष्टादशत्वं पुन-
स्तद्द्वैगुण्यमुपेत्य सा परिणतानन्त्येन तत्त्वैक्यवित् ॥५४॥

यद्वाण्या नहि बालभङ्गिषु परं शिक्षापि संशिक्षते
नान्वर्थ्यं च निरुक्तिरेति नितरां निर्णीय निर्णीय वा ।

यद्वाणीं न विकल्पतेऽपि निखिलः कल्पः सुकल्पं न वा
ज्योतिर्ज्योतिरुपैति नापि निवहः स्वच्छन्दतां छन्दसाम् ॥५५॥

यद्वाण्या उदितादिवाक्यरचनं शुद्ध्येकहेतुप्रथं
शब्दानां श्रुतिगोचरत्वमगमच्छास्त्रं कलासं न किम् ।
अन्योन्यं प्रतितन्त्रतामपि गतैरादौ तदत्यादराद्
यत्प्राशस्त्यमपेक्ष्यतेऽपि कृतिभिः स्फोटात्ममेयोद्भटम् ॥५६॥

पूर्वं कर्मगणेन कामकलया व्यक्तेन बन्धातुरं
मीमांसारचयज्ञनं हतगतिं निर्मूलितप्रज्ञया ।
छायामाप्य गिरोऽथ यस्य विमलां भूतोत्तरा ब्रह्मवित्
प्राकट्येन कृतार्थतां परिययौ मुक्तिं समापय्य तम् ॥५७॥

प्रामाण्योचितमेयभास्कररुचः सन्देहमन्धं तम-
श्छिन्दन्तः सुजनप्रयोजनकृतो दृष्टान्तसिद्धान्तिनः ।
अङ्गैस्तर्कितनिर्णयप्रविलसद्वादानुजल्पा गिरा
वैतण्ड्याद्यगता न यस्य विवृतास्तर्का विभान्ति स्फुटम् ॥५८॥

बौद्धैर्बुद्धिमवेचितुं विरचिताशीतिर्मतानां चतु-
ष्पूर्णा सांख्यगणा गताश्च विलयं तत्त्वाभिसंख्यानतः ।
अर्थानाकलितुं विशेषरचनोपात्ता च वैशेषिकै-
र्यद्वाण्या गतये त्रिदण्डिनिवहा भूतास्तथा शाम्बराः ॥५९॥

प्राणे केचन चित्तभूमिषु परे केचिच्च बुद्धावह-
ङ्कारे केचन केचिदिन्द्रियगणे केचित्तदर्थव्रजे ।
देहे केचन पुत्रदारधनिताज्ञाने परे वोद्यता
यद्वाण्याः परमार्थमाप्तुममलं लीना न वा दुर्मलाः ॥६०॥

आयुर्वेदकलागिरः समुदिता याता न वा वेदतां
शस्त्राणां सरणिर्निजाकृतियुता किं वा न सा शास्त्रताम् ।
गान्धर्वं मृगवञ्जनं नियमयत्याराद्रसानां निधिः
स्वार्थं याति न यस्य वार्थरचना वेदादिबीजेशितुः ॥६१॥

वाणीं यस्य विचार्य नित्यविषयां मृत्युञ्जयस्यैति वा
सङ्कल्पैर्न विकल्पितं विसदृशं स्वार्थं पुराणं मिथः ।
अज्ञात्वेति-बभूव-हेति विवदन् सोऽपीतिहासव्रजः
साक्षाद्वस्तु पिधाय पूर्वकलया बध्नाति नान्तःस्थया ॥६२॥

नानाभावभवं प्रभावविशदं शक्त्यादिसर्गप्रथ-
मन्तर्लक्ष्यकलं स्फुटाभिधमलं तात्पर्यसाराश्रितम् ।
साहित्यं परमाप्य सन्नवरसैर्वाण्या अलोकस्थितेः
साहित्यं नहि शोभते गुणगतं यस्याभिसौहित्यवत् ॥६३॥

द्वैधं राजिविराजिताः प्रथिततां द्वात्रिंशदंशैर्गताः
स्वज्योत्स्नानिकरेण यस्य वदनोद्भूता रदा उद्यताः ।
पूर्वं जेतुममुं शशाङ्कमथ तत्संप्रार्थितेनामुना
कारुण्याकुलचेतसा च्छदयुगेनाच्छादिता भान्ति किम् ॥६४॥

प्रेतान् पञ्च विलोक्य पद्मजमुखान् स्वस्वैककर्माक्षमान्
शक्त्याक्रान्तगतीन्निजासनतले संस्थापितान्येन किम् ।
तत्तत्कर्म समं विधातुमखिलं स्वेनैव संप्रापितं
पञ्चाङ्कं मुखमामुखामुखलसत्सच्छक्तिना राजते ॥६५॥

पञ्चाम्नायमयी महाद्वयनयध्येया न देयासतां
पञ्चभ्यः सरणिर्मुखेभ्य उदिता भातीह यस्येशितुः ।

नद्येव स्वमपांपतिं विजहते गत्वाधिगन्तुं यया
पञ्चत्वप्रकृतं गमागमभयं पञ्चाभिमानोज्झिताः ॥६६॥

मध्येबिन्दुविभाजितं गिरिजया पुण्यैरगण्यैर्जितं
लालित्याद्वयवादि यस्य चिबुकं किं वर्ण्यते वर्णवत् ।
बालाबालबलेन भैरवशिवाकारानुसारं द्विता-
मेकं यातमधःस्थकण्ठवसनं यद्युक्तभूत्युज्ज्वलम् ॥६७॥

धात्रादीनपि हेतिलेशजनितस्पर्शाद्विमोहं नय-
च्चङ्क्रेताशीविषसंविभक्तविषये कालार्दनावस्थितेः ।
कण्ठे यस्य विषं विभाति विशदे सद्योविषादच्छिदो
गङ्गासङ्गमकांक्षिणीव यमुना यान्त्यूर्ध्वमादिस्थले ॥६८॥

इच्छामात्रकृतक्रियेण युगवद्दीर्घा मृणालोज्ज्वलाः
पूर्वं व्यर्थमुदञ्चिताः परिघवत् पीना भुजा येन किम् ।
भूयस्ताण्डविकाङ्गहारविधये युक्ता वियुक्ता मिथः
केचित्केचन शैलजाङ्गलतिकास्पर्शोन्मुखाः सार्थकाः ॥६९॥

हस्तैर्हेतिगणं दधाति नियतं योऽष्टादशत्वं गतं
विद्यानां निजवक्त्रवारिधिसमावासोद्भटानां पृथक् ।
द्वीपानामपि सप्तवारिनिधिषु प्राप्तस्थितीनामिव
रक्षायै प्रकटाभिनीतिविमलं कारुण्यवारांनिधिः ॥७०॥

यद्धस्तैर्गलहस्तिता जलतया व्याप्ता व्रजाः पाङ्कजाः
सद्योरागवियुञ्ज्यगस्थितिगतान्येतानि पत्राणि वा ।
व्याकोशानि पुनः प्रयान्ति कुसुमान्यागत्य शीघ्रं ह्रियं
प्राप्तान्येव पराजितानि च सदा सत्सौकुमार्यश्रिया ॥७१॥

कः शाखाः करपल्लवेभ्य उदिता वैशाखजन्मस्थिते-
दृष्ट्वा विस्मयतेऽर्धदेहकलयाक्रान्तस्य नापर्णया।
यस्यानाप्य च नागपंक्तिगुणतां यासां श्रितानां पृथ-
गस्तं याति विधुः सदानवदशां च्छायां नखज्योतिषाम् ॥७२॥

वक्षो यस्य च शारदेन्दुविलसद्बिम्बं विभूत्युज्ज्वल-
मीषत्प्रोन्नततज्जगण्डजशिलं रोमद्रुमैर्निर्भरम्।
पार्वत्याः परिलुण्ठनाय विवृतं यस्मान्नवाधित्यका
भावं प्राप्तुमुपस्थिता हतगतिः कैलासपृथ्वीभृतः ॥७३॥

यत्सत्कुक्षिगता विभाति च वलीभङ्गिर्मिथोऽसङ्गभा-
गूर्ध्वाङ्गाचलनिःसृतौघललिता नाभ्यम्बुराश्युन्मुखी।
भस्मोद्धूलितरोमतुङ्गविगलत्तारङ्गरङ्गोज्ज्वला
स्वभ्यासं दधती हितं त्रिपथगा भूतेव नाकापगा ॥७४॥

यज्जानू परिवर्तुलौ सुविपुलावग्रे नमन्तावलं
भातो लोचनसन्ततस्थितिजुषौ पुण्यस्वधामोज्ज्वलौ।
सोमार्कौ त्रिदशेशमस्तकलसन्नानामणीनां व्रजै-
र्निर्घृष्टौ चरणाविवाभिपतितुं मध्यस्थितावुद्यतौ ॥७५॥

स्थित्योर्ध्वापघने सुनिर्मलवपुर्वामे च नेत्रे द्विधा
सन्तोषं न गतो यथा निपतितो यत्पादयोरादरात्।
प्राप्तुं सदृशतां गतोऽकृशमहोरूपां नखानां विधु-
र्जेतुं द्वादशधा स्थितं दिनपतिं किं द्वादशात्मप्रथाम् ॥७६॥

पादाभ्यां नु विचिन्त्य पद्ममुदितं सस्पर्धितुं सर्वदा
जाड्यस्थं नविमृष्टदुःसहमहापापापराधावृतम्।

यत्पङ्कप्रभवं चकार परमो धाता श्रियावर्धयत्
पद्मेशस्य च पद्मजस्य विधिवत्पूज्यत्वमापाद्य तौ ॥७७॥

यत्पादाम्बुजराजयुग्ममलं नित्यं प्रफुल्लं शिरो-
नद्या अभ्युदितं न वा जलतया स्पृष्टं बहिर्वान्तरा ।
जङ्घानालसुकण्ठकाञ्चितमधोवक्त्रं च पत्राकृते-
रुद्यच्छाखमवेक्ष्य को न लभते श्वेतारुणं विस्मयम् ॥७८॥

अंशं नावतरत्यवाप्य शशभृद् व्योम्नो प्रदिम्नो नु किं
लौहित्यस्य खमुद्यतं जलभरादारोढुमब्जं न वा ।
नाक्राम्यः प्रचलत्यनूरुरपि सन्मार्गे निरालम्बनेऽ-
विश्रान्तं किमु गर्वतश्चरणयोर्यस्याखिलाधीशितुः ॥७९॥

यत्पादौ कमलोत्तमौ कमलजेनाराधितावाहितौ
शीर्षस्थे कमलासनेऽपि कमलानाथेन नाथत्वदौ ।
यावुत्कारुणसन्निभौ न नयतोऽस्पृश्यानि भूयो निशा-
व्याकोशं नयनाननादिकमलान्याशाकृशानां भृशम् ॥८०॥

यत्पादौ हृदि सन्निधाय विधिवत् सिद्धादिविद्यानिधी
विध्याज्ञाविधिमात्मबद्धमधिकोद्भेदाधिमौपाधिकम् ।
बुद्धो विध्यविधिप्रसादनधिया वन्ध्यस्त्रिवेदीविधे-
रुल्लंघ्य स्वपदैः पदेन भजते निःस्पन्दसत्सम्पदम् ॥८१॥

तौ यस्याप्यरविन्दनाभिरभितः किं वारविन्दासनो
बिन्दुस्यन्दममन्दवन्दनवशं पादारविन्दोद्यतः ।
स्वादित्वा मकरन्दवृन्दत उदानन्देन्दिरावेकदा
नाभौ स्थापयतः स पद्ममथ तज्जात्या तदाद्यासने ॥८२॥

यत्पादौ हृदि चिन्तयन् स्वकलितं वैकल्पिकं दुर्गणं
भूयश्चिन्तयति प्रदग्धहृदयं हार्दं च नो दुर्घनम् ।
मूर्ध्नि स्वौ चरणौ दधाति सुमनोमूर्धन्यमूर्धस्वपि
दुष्टैर्भालपदैः स्पृशन् व्रजति वा भाले न संस्पृश्यताम् ॥८३॥

ब्रह्माण्डादृढखण्डखण्डघटनासंघट्टनोद्दण्डितं
दोर्दण्डोद्धटितप्रचण्डविकटाटोपाभ्रकूटच्छटम् ।
स्रष्ट्राखण्डलमुण्डमण्डलकलाकाण्डोल्लसल्लुण्ठना-
शंक्यं खण्डकुठारकोट्यभिनयं यत्ताण्डवं मण्डति ॥८४॥

उद्दामभ्रमसम्भ्रमोन्नमनमत्पादाहतानामित-
दिग्दन्त्युद्भटहस्तखण्ड्यकमठोत्पृष्ठाभिमृष्टं स्फुटम् ।
उद्धूताम्बरघट्टितोडुपभवन्मार्ताण्डसन्मण्डलं
भ्रष्टाङ्गारकणं कृपीटभवतो यत्ताण्डवाडम्बरम् ॥८५॥

वीणावेणुमृदङ्गतालललितध्वानोल्लसन्मूर्च्छना-
मूर्च्छन्मोहमहर्षिहर्षनिभृतध्यातं समाधेः पदे ।
नानारागतरङ्गरङ्गमुखरैर्गन्धर्वकिंपुंवरै-
र्गीतेनोज्ज्वलितं गतिप्रचतुरं यन्नर्तनावर्तनम् ॥८६॥

संशिक्ष्याभिनयोन्नयं गतिविधिंख्याताप्सरोभिर्ध्वनड्-
ढक्काडिण्डिमकाहलीडमरुजैः कोलाहलैराकुलम् ।
लौल्योपोद्बलितं कलिप्रियमुनीशानादिभिर्वादितै-
र्नानावाद्यपदैरनूदितगतं यल्लास्यमाभासते ॥८७॥

चण्डाभिर्भुजकोटिभिः परिवृढं पीडामुडूनां नय-
न्मार्ताण्डस्य च मण्डलं ध्रुवममुं निर्भ्रान्त्यमापादयत् ।

तारास्ताडयदीडितं सुरगणैः संखण्ड्य हेडां दृढं
क्रीडाखेटकनाटकं नटपतेर्नाट्यं न यस्योद्भटम् ॥८८॥
कृत्यौन्नत्यतिरोहिताभ्रमखिलं पातालमान्दोलयत्
पीलून् वेल्लयदाकुलं विदलयद्धेमाचलं हेलया ।
नीलाद्रिं च हिमालयं लयमहः सञ्चालयत्कुडली-
शानं यस्य च भूतलं विनिमयं शक्त्या नयद्राजते ॥८९॥
स्वस्वातन्त्र्यपरानुभूतिकलयावश्यंभवित्र्योद्गते
साहिब्कौल इतिप्रथावति पदे निर्माति यः सासनम् ।
देवीनामविलासनाम्नि विवृते तत्तत्प्रभावोदयात्
तत्काव्ये शिवसिद्धिनीतिसहजे भक्तिः प्रधानागमत् ॥९०॥

इति श्रीमहामाहेश्वराचार्यवर्यसाहिबकौलानन्दनाथविरचिते
नामविलासे प्रथमा भक्तिः ॥ १ ॥

# द्वितीया भक्तिः ।

तमेकदा नन्दिगणो गणानामधीश्वरः [1]प्रश्रयसंश्रयात्मा ।
[2]शस्ये रहस्ये विदिते[3] हितेऽपि स्थिरस्थितिर्द्वारि [4]विदारितेहम् ॥१॥
स्वस्वामिसंन्दिष्टकटाक्षसंज्ञामात्रेण [5]सन्तर्जितसर्वचेष्टः ।
[6]विशिष्टशिष्टादृतकष्टलब्धाविनष्टदौवारिकभावतुष्टः ॥२॥
ब्राह्मे समुत्थाय मुहूर्तवर्ये ब्रह्मादयो योगिवरा यदीयात् ।
ध्यानाद् विनष्टाखिलकर्मदोषाः कुर्वंस्तमीशं सततं समक्षम् ॥३॥
कांश्चिन्नियोज्योचितदन्तकाष्ठे कांश्चिन्मृदाद्याहरणेऽपि शुद्धौ[7] ।
स्नानार्थवारामितरान् गणांश्च वस्त्रादिकानां परिवर्तनेऽन्यान् ॥४॥

---

१. प्रश्रयस्य संश्रय आश्रय आत्मा यस्य, प्रश्रय एव संश्रय आश्रयो यस्येति वा, प्रश्रयं संश्रयति प्रश्रयसंश्रय आत्मा वा यस्येति वा। २. स्तुत्ये। ३. शिवस्य नन्दिनो वा न अन्यस्येत्यर्थः, तात्पर्यात् शिवस्य विदिते नन्दिनः स्वरूपेणेत्यर्थः, अथवा अकारप्रश्लेषेण अविदिते इतरजनानामहितेऽख्यातितिरोहितात्मनाम् । ४. निश्चेष्ट-मित्यर्थः। ५. सन्तर्जिता सर्वेषां गणानां चेष्टा, सन्तर्जिता त्यक्ता सर्वेषामिन्द्रियाणां चेष्टा वा। ६. श्रेष्ठभागधेयेन आदृतं संमतं च तत् कष्टं नानाविधतपस्तेन लब्धश्च असावविनष्टो विनाशरहितो दौवारि-कभावस्तेन तुष्टः। ७. ईश्वराभिषेकार्थजलनिर्मलीकरणे॥

यद्ध्यानतः स्यात् त्रिविधा[1] विशुद्धिः सिद्धाभिदां[2] विद्धहृदां[3] स्वभक्त्या
कदाप्यभेद्या[4] परमेश्वरं तं संस्नापयन्[5] स्पर्शकरः करेण ॥५॥
यत्रासते[6] सर्व इमे स्वरूपे तमासनेऽनर्घमणिप्रभाभिः ।
तरङ्गिते[7] सुष्ठु निवेशयंश्च सन्त्रास्य भूतादिगणं[8] प्रशान्त्यै ॥६॥
अर्चादिभेदस्य[9] निभालनापि[10] यदर्चया क्वापि[11] विलीनतायै ।
सर्वार्चनेद्धस्य[12] जनस्य तस्याप्यर्चार्थसम्भारमुपानयंश्च ॥७॥
संसाधितेनामलमन्धसापि तज्ज्ञैर्[13] गणेन्द्रैर्बहुधा सुधाभिः ।
पुष्टैः प्रकाम्येन[14] रसस्मितज्ञः[15] सन्तर्पयन् भोक्तृपराद्यवेद्यम्[16] ॥८॥
सहाशनान्तक्रियया क्रियाणां कर्ता परः प्रश्रयनम्रमूर्धा ।
शिष्टं प्रदिष्टाज्ञ उदारसत्त्वः शिष्टेश्वरेभ्योऽपि विभाजयंश्च ॥९॥
अहो यदाप्त्यै बहवोऽमरेशा अप्याप्तकामाः स्पृहयन्ति यत्नात् ।
स्वयं विघासं[17] तमुपादधानः प्रदक्षिणीकृत्य सुदक्षिणायः[18] ॥१०॥
ततः समुद्धृत्य सुखासनेन वाहेश्वरैर्[19] मूर्धनि संधृतेन ।
सस्पर्धभक्त्या त्वरितातिवेगैर्वर्यासु शय्यासु निवेश्य भूयः ॥११॥

---

१. कायिकाद्या । २. सिद्धैकत्वानाम् । ३. चुम्बितहृदयानाम् । ४. विशुद्धिः कीदृशी, अभेदनीया । ५. अतिनिकटवर्तित्वमतिप्रियत्वं च अभिव्यज्यते । ६. ईश्वरे सर्वस्य स्वात्मभूते । ७. मणिप्रभातरङ्गवति । ८. भूतादीनां गणं समूहम्, आदिशब्देन डाकिन्यादिग्रहणम् । ९. पूजापूजकपूज्यभेदस्य । १०. निश्चयः । ११. कुत्रापि भवति । १२. कस्य, सर्वार्चनेद्धस्य जनस्य भक्तस्येत्यर्थः । १३. अन्नसाधनज्ञैः । १४. प्रकृष्टं कांक्षणीयेन । १५. आनन्दे स्वादे वा स्मितज्ञः । १६. भोक्त्रादिभावरहितमित्यर्थः 'भोक्तैव भोग्यभावेन सदा सर्वत्र संस्थितः ।' इत्याद्युक्तेः । १७. उच्छिष्टम् । १८. शोभनो दक्षिणः सरल उदारो वा अयः शुभावहो विधिर्ज्ञानं च यस्य सः । १९. वाहाश्च ते ईश्वरा ब्रह्मादयः पंच, तैः ॥

तैं[1]रङ्गरागैर्विमलैश्च माल्यैर्वस्त्रैरलङ्कारवरैः स्व[2]सिद्धैः ।
कदाप्यलब्धैस्त्रिभिरीश्वरैश्च दि[3]व्यादिभिस्तं परिभूषयंश्च ॥१२॥
अत्युत्तमैस्तं[4] कुसुमैर्महेशं भङ्ग्योम्भितै रक्तसितासिताद्यैः ।
स्वयं प्र[5]वृष्टैरवकीर्य तैश्च ना[6]थैः सह द्वारमुपेत्य हृष्टः ॥१३॥
स्थाने प्रतिस्वं प्रविभज्य वीरान् गणादिकान् काम्यतमे प[7]रेषाम् ।
निजेऽपि मानं प्रतिनन्द्य मूर्ध्ना शान्तः प्रभूणामुपविश्य तिष्ठन् १४
ध्यानादतुष्टान् शिवमा[8]कृतीशं कयापि भक्त्या प्रतिवीक्षितुं तम् ।
समागतांस्तान् सु[9]मनोमहेशानुत्थाय कालेन निवेदयंश्च ॥१५॥
स[10]माहृतास्तै[11]रुपधाः[12] स्वभक्त्या निवे[13]द्य हस्ते विनिवेश्य सद्यः ।
आज्ञां परा[14]ज्ञाकृदपारसंज्ञो ज्ञात्वा प्रभोस्तान् प्रतियापयंश्च ॥१६॥
चतुर्मुखं मुख्यतमं सुराणां हृद्यानि पद्यानि कृतानि भक्त्या ।
आयान्तमादाय शिव[15]प्रसादं प्रापय्य दृष्ट्यायुप[16]वेशयंश्च ॥१७॥
कृता[17] त्वदाज्ञा हतका हताश्च दैतेयवर्याः सुभरो निर[18]स्तः ।
उर्व्या[19] अपूर्वं विहितं[20] वदेति संश्रावयन् विष्णुवचोऽतिमान्यम् १८

---

१. तैर्देवादिप्रसिद्धैरिति प्रत्येकं योज्यम् । २. इच्छया स्वयंसिद्धैर्नतु लौकिकनेपथ्यवत् साधनाहैंः । ३. दिव्यैरदिव्यैर्दिव्यादिव्यैश्चेत्यागमप्रसिद्धास्त्रिविधा ईश्वराः । ४. शिवम् । ५. आदावेकाकिना नन्दिना वृष्टीकृतैः । ६. पुनः पूर्वोक्तैर्नाथैर्ब्रह्मादिभिः प्रवृष्टैश्च । ७. अन्येषां ब्रह्मादीनाम् । ८. अवताररूपिणम् । ९. देववरान् ब्रह्मादीन् । १०. उपानीताः । ११. ब्रह्मादिभिः । १२. उपढौकनानि । १३. आदौ स्वहस्ते निवेश्य पश्चात् निवेद्य । १४. उत्तमाज्ञाकृत्, अन्याज्ञाकर्ता च । १५. तं ब्रह्माणं शिवप्रसादं प्रापय्य । १६. दर्शनाय । १७. तव आज्ञा मया विष्णुना कृता । १८. भारो दूरीकृतः । १९. पृथिव्याः । २०. अन्यत् कार्यं वद प्रभो ॥

सुरेश्वरं कल्पतरूद्भवानि फलानि पुष्पाणि नवानि वाण्या ।
सन्दर्श्य तुष्टै स्वयमानयन्तं संस्थापयंस्तं स्वपदे नयज्ञम् ॥१९॥
दिने दिने यज्ववरैरजस्रमावर्जितं सद्धविरा[2]श्रयाशे ।
स[3]र्वाश्रयेशस्य निदेशनेन विभाजयन् यु[4]क्तियुतोऽमरेभ्यः ॥२०॥
ध[5]र्मेश्वरं जातु निर[6]स्तवीर्यं सशंकमायान्तमुपासनार्थम् ।
निजाधिकारस्य निवेदयन्तं कृतं च कृत्यं परिसान्त्वयंश्च ॥२१॥
क्रव्यादनाथं धृतदेववैरं तं देवदेवे[7]शमलौकिके[8]र्हम् ।
उपासितुं प्राप्तमफल्गुभांडपाणिं स्थितं नीतिमुपासयं[10]श्च ॥२२॥
अनर्घरत्नान्यमलाकरेभ्य उद्धृत्य भक्त्या घटितानि सद्यः ।
प्रचेतसं सर्वरसैकसारमायान्तमावेद्य सभाजयंश्च ॥२३॥
स्वस्वार्थयूथाद् विविधान् सुगन्धान् मुहुर्नयन्तं पृ[11]षदश्वमारात् ।
शनैः शनैरीश्वरवीजनाय समादिशन् सेवनतत्त्वविज्ञः ॥२४॥
भक्त्या प्रसादीकृतमित्रसंज्ञं निधीशम[12]श्रान्तमुपासितारम् ।
विचित्रकार्येषु धनव्ययाय निदेशयन् वापि विभोः कटाक्षात् ॥२५॥
रुद्रान् समुद्रानिव स[13]द्गुणानां नानामणीनां प[14]रितोऽतिवीर्यान् ।
शम्भुप्रभाव्याप्ततनूविशेषान् निवेशयन् सादरम[15]स्तभेदम् ॥२६॥

---

१. स्वयमात्मना फलानि पुष्पाणि आनयन्तं शक्रं वाण्या वचनेन संदर्श्येत्यर्थः। २. अग्नौ । ३. सर्वेषामाश्रयाणामीशः पतिस्तस्य। ४. विभागयुक्तिज्ञः। ५. यमम् । ६. श्वेतनृपरक्षया दूरीकृतपौरुषम् । ७. शिवम् । ८. लोकोत्तरचेष्टम् । ९. यद्यपि तव देवानां सह वैरोऽस्ति, तथापि इह न वैरः कार्य इति । १०. संशिक्षयन् । ११. वायुम्। १२. सततम्। १३. सद्गुणानां समुद्रानिव । सद्गुणानां केषां, नानामणीनाम्। १४. समन्तात् निवेशयन्। १५. परस्परभेद-रहितं शिवादपि भेदरहितम्॥

कं[1]चिच्छिवागोपुररक्षणार्थमादिश्य यान्तं च शिवेक्षणाय ।
काण्डं कदल्या इव हेमवेत्रमास्फालयन् ह[2]स्तिमुखं स्पृश[3]न्तम् ॥२७॥
स्वब[4]न्धुपुष्पाणि सु[5]रापगायास्तूर्णं[6] विकासं स्वयमापितानि ।
आदाय तिष्ठन्तम[7]शीतरश्मिं निर्दे[8]शयन्नप्युदयं दयायै ॥२८॥
कलानिधिं भालकलावतारमवा[8]किरन्तं सुधयोत्पलानि ।
नीलान्यनीलानि च चन्द्रिकायाः प्रसारणायानिशमादिशंश्च ॥२९॥
गणेश्वरान् भृङ्गिव[9]रान् प्रहाय स्वस्वाधिकारेषु दिने दिनेऽपि ।
कार्याय वर्याय गणैकधुर्यः स्वयं स्वकार्यं[10] स[10]मुपास्य कुर्वन् ॥३०॥
[11]स्फुटत्किरीटोत्कटरत्नकोटीन् दण्डैस्तु[12]राषाण्मुकुटान् निवार्य ।
[13]शुद्धान्तयानाभिमुखस्य शम्भोः शुद्धान्त[14]रोऽतीव पुरःसरंश्च ॥३१॥
त[15]त्रात्म[16]जं ता[17]रकजीवहारं क्लेशादशेषात् सुरतारकं च ।
कृतप्रतिष्ठं युवराजशब्दे समागतं तं प्रणमन् स्वपित्रा ॥३२॥
सुरासुराणां ललनाः समातृगणाः समेताः कृत[18]तद्विलोकाः ।
विसृज्य जीवेश्व[19]रतां वहन्त्या मत्वा रमन्तं बहिरागतः सन् ॥३३॥

---

१. गणम् । २. गणेशम् । ३. गणेशं कथंभूतं, सुवर्णवेत्रं स्पृशन्तम् । ४. कमलानि । ५. गङ्गायाः । ६. विकासमापितानि । ७. रविम् । ८. सुधया सह नीलानि अनीलानि च उत्पलानि अवाकिरन्तम् । ९. भृङ्गी वरो येषां तान् गणान् । १०. आत्मना ईश्वरमुपस्थाप्य स्वकार्यं कुर्वन् । ११. स्फुटन्त्यस्त्रुट्यन्त्यः किरीटानां मुकुटानामुत्कटा उद्भटा रत्नकोटयो येषां, तान् । १२. तुराषाट् इन्द्रो मुकुटे येषां, तान् देवान् । १३. अन्तःपुरगमनसंमुखस्य । १४. स्वच्छान्तःकरणः । १५. शुद्धान्ते । १६. कुमारम् । १७. तारकासुररिपुम् । १८. कृतेश्वरदर्शनाः । १९. अन्यत्र जीवेश्वरत्वं पत्युर्दृश्यते, अत्र पत्न्या एवेत्यनेन अद्भुतमयार्धाङ्गदानत्वादिकमतिप्रियत्वं प्रतीयते ॥

संशिक्ष्य चर्यासु विनायकं तमन्तः समन्तादुपचारजासु ।
तद्द्वारमाश्रित्य निदेशवर्ती ध्यायन् समावेशदिशा तमीशम् ॥३४॥
आनन्दकन्दं करुणार्णवं तं श्रुत्वैकदन्तात्[1] परिखेलनाय ।
बहिः प्रयातुं विहितैकसंज्ञं सज्ञान् क्षणात् संरचयन्सुवाहान्[2] ॥३५॥
ततो वृषेशं बलिनां बलं तं गल्वर्कशैलं[3] प्रभया हसन्तम् ।
वेगेन चेतोऽपि सुचित्रयन्तं[4] विचित्रमुक्ताभपदक्रमं[5] च ॥३६॥
शेषैर्विशेषैश्च गतेरशेषलोकेशवाहान् परितर्जयन्तम् ।
अधःस्थशृङ्गं ककुदः[6] सुमेरोः सुरद्रुमस्कन्धविशालशृङ्गम्[7] ॥३७॥
लाङ्गूलविक्षेपविभेदिताभ्रमभ्रे समुद्रेष्वपि न स्खलन्तम् ।
अभ्यस्तयानं स्फटिकोपलेषु संरोहणेनाप्यवरोहणेन ॥३८॥
हुंकारगर्भैर्मुखरैश्च शब्दैः शब्दान् परान् संप्रलयं नयन्तम् ।
विभूषणैः किङ्किणिकादिभिश्च रत्नाभिमृष्टैः किरणान् किरन्तम् ३९
आक्रान्तमध्यं ककुदः सुवर्णसिंहासनाग्रेण सवल्गनासम् ।
मणिप्रभाभिः फणिनातिशालमूर्धाङ्गरागैरभिशोभितं[8] च ॥४०॥
निरस्तसंवेष्टनमासनाग्रादारोहदेशान्तिकवामभागम्[9] ।
आरोहयन्नन्यत आत्तपादाधारः पतिं श्रीपतिदत्तहस्तम्[10] ॥४१॥

---

१. गणेशात् । २. शोभनवाहान् । ३. कैलासपर्वतम्, स्फटिकशैलं 'गल्वर्कः स्फटिकोपलः' इति कोशः । ४. विस्मयकारकम् । ५. अतिश्वेतत्वात् मुक्ताभपदक्रमं, मुक्ताभानां पदानां सुवर्णोद्भिरणप्रकृतित्वं विचित्रेत्यनेन द्योत्यते । ६. ककुदोऽधोवर्तीनि सुमेरुशृङ्गाणि यस्येत्यनेन अत्युन्नतत्वं व्यज्यते । ७. कल्पवृक्षस्कन्धविस्तीर्णशृङ्गम् । ८. फणिना कीदृशेन, मणिप्रभाभिरतिशालमूर्ध्ना । ९. दूरीकृतोपरितनवस्त्रम् । १०. विष्णुदत्तहस्तम् ॥

वेगेन वायोः ससुवर्णवस्त्रप्रान्तस्थरत्नध्वनिनैजयन्तीम् ।
गणेन्द्रहस्तप्रतिरुद्धरश्मिपुरोगनानाविधवाहरत्नाम् ॥४२॥
प्रयोगसंहारविभागदक्षैर्यत्नैर्विसृष्टोद्गुलिकास्त्रशब्दैः ।
निर्घातशङ्काकलितामकस्माल्लोकानुकारोद्धुरभूतहासाम्[1] ॥४३॥
तूर्णं प्रतीच्छ प्रसरेति भाषासंशोभिवक्त्रानुचरेशवर्गाम् ।
कष्टोत्थितेन स्फटिकोपलेभ्यः सितीकृताशां रजसाप्यजस्रम् ॥४४॥
तालैर्विशालैः पणवैश्च रत्नस्फुरन्मुखैर्धेनुमुखैश्च शङ्खैः ।
भेरीव्रजैरानककाहलीभिर्दिवं तथोर्वीमनुवादयन्तीम् ॥४५॥
यथोचिताचारगतिप्रगल्भां महाचमूं तां पुरतो विधाय ।
संरुद्धसिंहासनपार्श्वरश्मिर्यथाभिलाषं गमयंस्तमीशम् ॥४६॥
विहार्य तं चैत्ररथादिभूमौ तैस्तैर्विलासैर्मृगयाविशेषैः ।
निवर्त्य नाथं स्वनिदेशनेन[2] विसर्जयन् देवगणं गृहेभ्यः ॥४७॥
कृतप्रणामेषु गतेषु तेषु प्रवेश्य नाथं निजसद्म रम्यम् ।
सन्ध्याभिवन्द्यं च समाप्तसन्ध्यं नीराजयन् दीपगणैः समन्तात् ४८॥
संविष्टमन्तः समुपास्य हस्तमर्दादिभिर्बोधविबोधकारम्[3] ।
अप्यात्तसौषुप्तसुखं[4] तदाज्ञां विदन् स्वदेशे शयनं च कुर्वन् ॥४९॥
किम्पूरुषैरप्सरसां गणैश्च गन्धर्वराजैरभिराध्यमानम् ।
तौर्यत्रिकेण[5] प्रतिबोधयंस्तं सपादसंवाहमबोधबोधम् ॥५०॥

---

१. जनहास्यकरणोद्भटभूतहासो यस्यास्ताम् । २. ईश्वरनिदेशेन । ३. बोधस्य विबोधं करोतीति बोधविबोधकार एतादृशमपि आत्तसौषुप्तसुखम् । ४. आत्तसौषुप्तसुखमित्यनेन असुप्तो हि सन् सौषुप्तसुखचर्वणाद्भुतपरमानन्दाद्वयसत्तारूपो जायते, नतु प्राकृतजनवत् सङ्कल्पादिवेदनात्मकस्वप्नावस्थाभागी भवतीति अभिव्यज्यते । ५. नृत्तगीतवाद्येन ।

दिने दिनेऽप्येवमखण्डभक्त्या निषेवमाणः परसेव्यसेव्यम् ।
स्तोतुं समाधेर्विरतं पतिं स्वं प्रचक्रमे प्रष्टुमनाः प्रसन्नम् ॥५१॥
( एकपञ्चाशता कुलकम् )

शिवेश शम्भो परमप्रकाशविमर्श निःस्पन्दनहर्षसार ।
स्पन्दैकरूपोतनरूपरूपनिरूपणीय प्रतिरूपरूप ॥५२॥
परादिदेवीश्वर तद्विकासविलासलास्यैकनटाधिनाथ ।
स्वातन्त्र्यतन्त्रोत्तम तन्त्रमन्त्यस्वमन्त्रमाचिन् परतन्त्रनेत्र ॥५३॥
नेत्रेश मन्त्राधिमहेशमन्त्रनाथादिपृथ्वीपरिमन्त्रणीय ।
अमन्त्रमन्त्रान्तरवित् सदैव स्वस्मिन् स्वयं स्वाकृतकानुभूते ॥५४॥
अमातृमेयादिमत प्रमाणप्रामाण्यकर्तः परदृष्टिमेय ।
अमेय मानीकृततत्त्वमायासम्मानितैतद्विभवानुभाव ॥५५॥
दिग्देशकालाकलनाकलाज्ञ तत्तत्कलानाकलनीयकाल ।
विशालसर्वात्मतलैकताल तज्ज्ञाभिभाल्यातलसद्धलान्तः ॥५६॥

---

१. अखण्डं यथा स्यात्तथा भक्तिस्तया । २. ब्रह्मादिभिः सेव्यम् । ३. शम् 'एतस्यैवानन्दस्य अन्यान्यानन्दानि मात्रामुपजीवन्ति' इति 'रसो वै सः' इति 'आनन्दादेव खलु इमानि भूतानि' इति 'आनन्दो ब्रह्म व्यजानात्' इत्यादिश्रुतिनिर्दिष्टं स्वानन्दं स्वरूपं वाति अनुसन्धत्ते 'शिवोऽहमस्मीति' निभालयतीति शिवः, तस्य आमन्त्रणं हे शिव, तदेव वाति राति ददाति स्वानुग्राह्येषु अनुग्रहदृशा प्रकाशयतीति च । अत एव कर्तुमकर्तुमन्यथाकर्तुं च ईष्टे इतीशः । सदैव पञ्चविधकृत्यकारित्वं च अनेन द्योतितम् । ४. तथा शमशेषोपद्रवरहितं चैतन्यानन्दलक्षणं कल्याणं भवति अस्मादिति शम्भुरुपासनापराणामुपासादिभेदहान्या स्वाविष्करणरूपकुशलप्रदातेति यावत्, भेदाभिमानिनां चित्तसुखादिकल्याणाविष्कर्तेति च । ५. ख. 'पोन्नत' इति पाठः ।

अहन्त्वबीजाङ्कुरितापरेह भावानुभूत्युन्मुख भावभाव ।
तत्कालिकाकारविचित्रचित्रशिल्प स्वयंसिद्धिसमिद्ध पश्यन् ॥५७॥
अनादिनादोदितविद्यहन्तापरासमस्पर्शविभागयोगिन् ।
एतत्तदालेख्यसवर्णवर्णमध्यप्रकाशोन्मिष सन्निमेष ॥५८॥
गुणीकृताहन्त्व परप्रधान भावानुसन्धानपरस्वभाव ।
स्फुटं विभागिन् विखरानिमेष परानिमेषाह्वय रूपशेष ॥५९॥
अचेत्य सच्चेत्यकलापरूपा(प)शिखण्डिनीखण्डकृताण्ड देव ।
चिदीश तुर्यातिगतप्रकाशविश्रान्त दुर्भ्रान्तिहरामलान्त ॥६०॥
आनन्दनाथापरनन्दकन्द सुस्पन्दसान्द्रोदय मन्दमन्दम् ।
इच्छेश कामाद्यकलेच्छ नाच्कहलाकृते स्वच्छतरस्वचार ॥६१॥
अज्ञानविज्ञानसमुज्झितज्ञ स्वज्ञानविज्ञानसमाधिसिद्धे ।
ज्ञानेश कर्त्रादिकथार्तिवन्ध्य क्रियेश नैष्कर्म्यविशेषशेष ॥६२॥
अपोहटङ्कात्मविभेदहानिघनेक्ष्यविच्छित्तिकराच्छिदेह ।
स्मर्तव्यमुख्याभिनिकृन्तनेद्ध स्मृतीश्वराहंस्मरणप्रमाण ॥६३॥
मायोर्ध्वसंशुद्धविबोधक भावाभिशून्यापरशून्यनाथ ।
पराणुमायासुविलासभास्यत्रैश्वर्यखेलोद्धरणैकहेतो ॥६४॥
समष्टिनिष्ठा[1]भरणप्रभान्तर्यामिन् सुसूत्रात्मकलातिदक्ष ।
वैराजराज स्वजनित्रिभावसमाजनीराजनराज्यभर्तः ॥६५॥
मायोररीकारक मारजीव जीवैकजीवाप्रतिमप्रभाव ।
सयुक् सखे स्वावरणातिलीलाचातुर्यचिन्तामणिभूः प्रभूमन् ॥६६॥
अव्याकृतानन्दसुधाम्बुराशे सत्सम्पदापन्न नकामकाम ।
स्वाहंकृतिव्याप्तिविमर्शनीय प्राज्ञैतदासंप्रलयाधिकर्तः ॥६७॥

---

१ ख. 'निष्का' पाठः ।

स्वोद्द्योतसंद्योतितचित्रचित्रविचित्रभावोत्कलिकाकुलान्तः ।
अकालकाष्ठाकृतिकालकालकाष्ठाप्रकारप्रकृतैकनैक ॥६८॥
आधारहीनासमवाययोग्यसम्भारभाराकृतिसाक्ष्यदातः ।
स्वयंसमुल्लेखविलेखलेखालेख्यैककालेखक तैजसात्मन् ॥६९॥
समस्तसाधारणभावभावाभावप्रभाविर्भवनानुभाव ।
अखण्डितैश्वर्यविबोधखण्डोररीकृतानीशनविश्वरूप ॥७०॥
भोक्त्रादिवार्ताकल भोग्यभोक्तः संवित्तिसंभोगकरैकभोग्य ।
अलौकिकानन्दसुधैककन्द नानन्दजानन्द महारहस्य ॥७१॥
विराडधिस्थूलकलोपदेष्टः पराणुसूक्ष्मत्वविबोधबोद्धः ।
व्योमाशयव्यापकतानवाप्यव्याप्ते न्नतव्यापकतापरत्व ॥७२॥
अहंत्वदावेशपदात्यहन्त्व ससर्वसर्वेश्वर सर्वसर्व ।
त्वत्पादपद्मोत्थरजांसि सृष्टिसंहारशक्तीनि परं जयन्ति ॥७३॥

( द्वाविंशता कुलकम् )

स्वस्वातन्त्र्यमहानुभावकलयावश्यंभवित्र्योद्गते
साहिब्कौल इति प्रथावति पदे निर्माति यः स्मासनम् ।
गायत्रीमनुजेऽनु सन्ततनोर्भाष्यस्य तेनागमत्
काव्ये नामविलासनाम्नि रचिते भक्तिर्द्वयोः पूरणी ॥७४॥

इति श्रीमहामाहेश्वराचार्यवर्यश्रीमत्साहिबकौलानन्दनाथविरचिते
नामविलासे द्वितीया भक्तिः ॥ २ ॥

---

१ ख. 'स्वद्योत' पाठः । २ 'गायत्र्या अनुजे' इति साधुः पाठः ।

## तृतीया भक्तिः ।

नमो नमस्तेऽस्तु नमो नमस्ते भूयोऽपि भूयोऽपि नमो नमस्ते ।
न हृद्गिरां गोचर एष वाच्यो वाच्योऽपि लक्ष्यो महिमा तवैव ॥१॥
महाद्वये दर्शनराजराजे प्रसिद्धसिद्धाप्रतिमप्रभावः ।
चितिः स्वतन्त्रोऽखिलसिद्धिसिद्धिः पूर्णोऽपि शून्यो जयसि स्वभातः[1]
अङ्गीकृतैतत्प्रसरे प्रसारमुपैति विश्वं तदिदं न वान्यत् ।
अन्यद्यथा त्वय्यभिलीयते च निमेषतत्त्वोन्मिषिते विशेषे ॥३॥
अन्यस्य कस्यापि न वात्र शक्तिर्भिन्नस्य तस्यास्त्यपि नात्मभानम् ।
अभिन्नभावो विषयत्वमेति विशेषशून्या स्वविदिस्तवैव ॥४॥
कालादयस्त्वत्कलया विभातास्त्वां सर्वकालं कलितुं हि नालम् ।
अत्रानुभूत्येकपदे न मान्यं मानं विमानं नच चोपपन्नम् ॥५॥
नित्योदितस्ते महिमा हि मत्त्वसमः समत्वासमतामतोज्झम् ।
त्वमेव चैतद्वपुषावभास्य भांसि स्वयं कारणतादिभास्य ॥६॥
अपूर्वमाभाति यदि प्रमाणान्न तस्य सत्तास्ति न वेतरापि ।
तदन्यदस्माद् यदिवावभाति तत्तत्[2] स्वसिद्धं किमिहान्ययोगः ७॥
विश्वैकवित्तिं परमं विभुं त्वां को वेद को वेदयितुं विधिज्ञः ।
स्वस्वोक्तियुक्तिर्विदिताखिलस्य न कोऽपि तस्या विदितत्वमेति ८॥

---

१ क. 'स्वभाव' इति । २ ख. 'तत् त्वत्' पाठः ।

सर्वस्वसंहारसुसिद्धसिद्धेरीशोऽपि यत् त्वं कृतसामरस्यम्(ः) ।
नैषोऽपि यातः किमतः प्रतीपमभिज्ञतां भोगविमोक्षभाक् स्यात् ९॥
मनोवपुर्नीलसुखादिकस्य मानोपहारक्रमतः परस्मिन् ।
आवेश एतस्य परोऽप्युपायस्त्वज्ज्ञमये मातरि सत्सुखेन ॥१०॥
इमं समं दर्पणराजपुर्या भिन्नं न भिन्नं निजयेच्छयैव ।
नवानवेहं विभवं स्वभित्तौ स्वात्मा समुन्मीलयसीश्वरेशः ॥११॥
त्वमत्र चादायकतामवाप्तः परं यथा(दा)देयमिदं विधाय ।
नानानुरूपं मिथ-औचितीद्धं स्वयं विलासैकरसोऽवभासि ॥१२॥
अत्यस्फुटेदन्त्वमहन्त्वभासा परं पराकारपरं तदेव ।
समाहिते नित्यशिवस्वभावे सम्भाव्य भाव्यं विदि पश्यसीश ॥१३॥
ऊरीकृतेशानपदेऽस्फुटत्वत्परत्वमेतत् त्वयि तत् तथैव ।
शाखाव्रजावान्तरभेदभिन्नो माता समेऽस्मिन्नसि विद्ययापि ॥१४॥
ज्ञानाकलः कर्तृतया सुशून्यो विशुद्धबोधस्तदभेदसारम् ।
अपारवारं हर पश्यसीदं भविष्यतां पूर्वदशाविशिष्टम् ॥१५॥
शून्यप्रमातृत्वमये प्रलीनकल्पं त्वयीदं लयकेवलेऽपि ।
मितं विभिन्नं परितोऽपि चैतत् साकल्यतल्पे सकलं कलेश ॥१६॥
तां स्वप्रकाशैकविशुद्धदेहां श्रितस्य वानाश्रिततां स्वशक्त्या ।
भावा अभावानुभवास्तवैव प्रकाशकाशाः सततं विभान्ति ॥१७॥
अनुत्तरानन्दमयप्रकाशविमर्शसर्वैकघनस्य भूयः ।
परस्य विश्वातिगतस्य विश्वमयस्य विश्वं तव तत् स्वरूपम् ॥१८॥
आदायकादेयकथाविमाथो न वस्तुतस्तेऽपितु तत्तदाद्यैः ।
नानाविशेषैः परमः शिवस्त्वं स्फुरस्यभेदोऽपि विलासनाथः ॥१९॥

स्वात्मैकतासंस्थितविश्वभासे रूपेण मात्राद्युचितेन पूर्वम् ।
शून्यातिशून्यात्मतया प्रकाशाभेदाच्चिदैक्याप्रथयावभासि ॥२०॥
संविद्रसाऽऽयानगुणैकजीवैस्तत्त्वैश्च कायैर्भुवनैर्हृषीकैः ।
नानानिसर्गैर्भवभूतिदेहः संकोचवान् वा प्रथसे यथा त्वम् ॥२१॥
तथा ससङ्कोचचितिस्वरूपो विश्वैकरूपोऽपि न विश्वरूपः ।
आदायकोऽयं द्रुमबीजतुल्यो विकल्पतेऽपि त्वदभेदसारः ॥२२॥
विश्वेश्वरोऽयं भगवांस्त्वमेव परं स्वसङ्कोचितया यथान्यः ।
सङ्कोच एषोऽपि विचार्यमाणस्त्वत्तो विभिन्नो नहि किञ्चनापि २३॥
एतत्प्रबोधप्रथनं हि जीवन्मुक्तिस्त्वदन्यत्वमतिश्च बन्धः ।
न तत्त्वतस्तौ तव नित्यमुक्तेर्बन्धेऽप्यबन्धे ह्यफ(म)ला मनीषा २४॥
स्वरूपमाच्छाद्य निजेच्छयैव सङ्कोचमाभासयते यदा चित् ।
गुणागुणत्वप्रथया विभाति द्वयी गतिः स्वस्य तदाभिदस्य ॥२५॥
प्राधान्यपक्षे स्वचितः कदाचिज्ज्ञानाकलत्वादिपदाभिमर्शः ।
क्रमात् क्रमादूर्ध्वपदप्रवेशे स्वानाश्रितत्वं भवति स्फुटं च ॥२६॥
कदापि सङ्कोचममुं प्रसादपात्रं विधायात्मधिया प्रधानम् ।
संवित् स्फुरन्त्यस्ति यदा तदापि शून्यप्रमातृत्वमुपैति सिद्धम् २७॥
एवं चितिः सङ्कुचितात्मरूपा चेत्योन्मुखी चेतनतावरूढा ।
द्वयाभिसङ्कोचनशोचनीया चित्ताख्ययादायकताद्ययोक्ता ॥२८॥
तत्रापि तत्रापि विकल्परूपा सदा त्वदर्थानुसरोद्यतस्य ।
ज्योतिष्द्वमात्मीयमलुप्तमेव सुव्यग्रराजस्य यथा स्वराज्यम् ॥२९॥
देहादिकाश्चित्तमतः प्रधानं तत्संस्कृतीद्धापि च शून्यभूमिः ।
न चानुसन्धानमिहान्यथा स्यान्मायाप्रमाता खलु तन्मयोऽतः ३०॥

निर्णीत एवं शिव एव साक्षात् स चेतनो ग्राहकताभिमानी ।
भेदायुजै(य नै)तस्य विभेदकारैरन्यस्य तत्त्वानुपपत्तितोऽपि ॥३१॥
प्राणादिसङ्कोचमतिः स एको गृह्णन् ससङ्कोचपदार्थभेदम् ।
प्रकाशवत्त्वेन निजेन भूयो द्विधार्थसङ्कोचितया मतोऽयम् ॥३२॥
स्वप्नेऽप्यसंस्पृश्यगतौ मलेन स्वस्मिन् मलानि प्रतिसन्दधानः ।
राजा यथा पङ्किलभूमिमग्नः सुप्तः स्वराज्यं न विदंस्त्रिधायम् ॥३३॥
स प्राणपुर्यष्टकदेहशून्यस्वभावभावी प्रथितश्चतुर्धा ।
वलैश्चिदाद्यैः स्वयमङ्गभावाद् विद्यादितासैरपि पञ्चधायम् ॥३४॥
षडध्वमानाभिमुखश्च षोढा प्रमातृबोधात् किल सप्तधायम् ।
अष्टप्रथां याति पुरीश्वरत्वात् प्रयात्युपायैस्त्रिगुणैर्नवत्वम् ॥३५॥
देवेश्वरत्वे स दशत्वमाप्तस्तत्तत्स्वभावादपि मध्यसंख्यी ।
पञ्चीकृतैः सप्तविधैर्विभागी तत्संख्यया मातृभिरेष स त्वम् ॥३६॥
स्वीकृत्य देवेज्यमतादि भातास्त्वं भूमिकाः खेलसि नित्यमुक्तः ।
अयं परः शाम्बरिकः स कोऽपि विवादरङ्गं बहुधावभास्य ॥३७॥
लोकातिशायि प्रविलोक्य लक्ष्मीबलं विलासैकफलं विशालम् ।
आनन्दनं केचन तत्स्वरूपं लोकायतास्त्वां प्रियमामनन्ति ॥३८॥
ततः प्रियं केचन ते व्ययेन लक्ष्म्यास्तथा क्रेयमलं स्वमूलम् ।
विलोलखेलं कुलपावनं त्वां पश्यन्ति नाथं तनयं स्पृहाभिः ॥३९॥
व्यस्तेषु भूतेष्वनवाप्यमाप्यं सम्मिश्रितेषु प्रतिदेवयानम् ।
चिद्रूपमानन्दसमं गुडादौ तीर्थ्या गुरोस्त्वां प्रियमाद्रियन्ते ॥४०॥
अनेलमूकादिषु दुःखदृष्ट्या ज्ञानक्रियाकारणभावतश्च ।
स्वच्छं ततोऽपि प्रियमिन्द्रियं त्वामिन्द्रादिवन्द्यं च विदन्ति केचित् ॥

विनाशनां वापि पिपासुतां वा प्राप्तेर्विमूर्छादिकवेदनानाम् ।
कर्माद्यधिष्ठातृतया च सर्वप्राणं विदुः प्राणमिहेतरेऽपि ॥४२॥
एतज्ज्ञयातः श्रिययाखिलैकनिमित्तसङ्कल्पविकल्पशक्त्या ।
प्रकाशयन्ते प्रतिभासु चित्ताकाशश्रिया त्वामपरे चिदीशम् ॥४३॥
ज्ञानार्थवृत्तित्त्वमनिर्विकल्पविकल्पकादिप्रतिभास्वरूपम् ।
क्षणं क्षणं लोलमपि स्मृतीशं त्वां सौगता अस्मरणं स्मरन्ति ॥४४॥
भावस्य सर्वस्य लयेऽनुभाव्यं सत्तापरज्ञानविहीनभावम् ।
शून्यं सदापूर्णमहो विदन्ति स्ववेदकं माध्यमिका भवन्तम् ॥४५॥
जीवादितत्त्वे नवधा विभक्ते हेयात् समादेयतमं विमुक्त्यै ।
अर्हन्तमष्टादशदोषहीनमर्हन्ति जैनज्ञजना भवन्तम् ॥४६॥
स्थूलाच्च कायाद् विषयिश्रियश्च नितान्तमुद्रिक्तगतिं महेशम् ।
सदापि तत्तापरिमाणमान्यमाशाम्बरास्त्वां प्रदिशन्त्यधीशम्॥४७॥
ज्ञानादिभिः स्वात्मगुणैर्विशिष्टं भवेऽपवर्गे तु तदुच्छिदाभिः ।
शून्यं निमित्तं परमाणुतन्त्रे त्वां तार्किका नाथ वितर्कयन्ति ॥४८॥
सप्तार्थवित्तेः परितः समाप्त्या प्राप्तादवाप्यं परमाप्तभावात् ।
सामान्यमेयं च कणादवादा वदन्ति कर्तारमिमं विभुं त्वाम् ॥४९॥
प्रत्येयविज्ञानमहंप्रतीतेरज्ञं तथोपाधितिरस्कृतत्वात् ।
विभिन्नवर्गैकविधेयसर्गं त्वां भाट्टवर्गा मृगयन्त्यमृग्यम् ॥५०॥
अन्तर्बहिर्वा प्रतिसर्गवृत्तेर्नाशाच्चमत्वान्नितरामुपाधेः ।
अहंप्रतीतेरपि वाज्ञवृत्त्या प्राभाकरा अज्ञमुदाहरन्ति ॥५१॥
जीवाद्विभिन्नं समुपास्यमस्य संजीवनं कारणकार्यतायाः ।
पतिं पशूनां पशुपाशनाशशेषं विदुः पाशुपता वत त्वाम् ॥५२॥

श्रीवासुदेवं प्रकृतिं परां त्वां प्रकाश्य जीवाग्निकणं लसन्तम् ।
अस्मात् स्वकार्यादितरं च केचित् प्रपञ्चयन्त्यञ्चितपाञ्चरात्राः ५३॥
अक्लेशकर्माशयपाकतन्त्रः प्रधानसत्त्वप्रतिबिम्बितत्वात् ।
पातञ्जलीये सकलज्ञ ईशः स्मृतोऽसि संसारिविलक्षणोऽपि ॥५४॥
प्रकृत्यधीनाखिलकार्यमन्यं तस्याश्च तज्ज्ञं पुरुषं विशिष्टम् ।
असंख्यसंख्यं विततैकसंख्यं भोक्तारमाख्याति च सांख्यसंख्या ॥
सर्वस्य सर्वव्यवहारवृत्तेः शब्दार्थतोऽतस्तदधीनसृष्टेः ।
आद्यन्तमानो ध्वनिपण्डितानां मतो ध्वनिर्ब्रह्मतयाध्वनिस्त्वम्५६॥
अनाद्यविद्यानुभवेन कर्तृभावादिभाव्यं सकलैकभावम् ।
श्रुत्यन्तसंवादनखेललोला ब्रह्माद्वयं त्वानुभवन्ति सन्तः ॥५७॥
विश्वोत्तरो विश्वकरो बलैको निवेशितोऽस्यात्मबले परैश्च ।
विश्वत्र विश्वेन च विश्वविश्वं त्वां ते विदुर्विश्वमतोत्तरज्ञाः ॥५८॥
तदुत्तरं तन्मयमङ्गगुह्यं पूर्वं सदापूर्वमिमं स्वतन्त्रम् ।
केचिन्महार्थैकनयाः प्रपन्नास्त्रिलोकतालोकविलोकलोकम् ॥५९॥
अस्वप्रकाशानुमितिप्रकाशदुराशयाशाङ्कशपाशराशे ।
विशेषवैदग्ध्यजुषं महेशं माहेश्वरास्त्वां भृशमाविशन्ति ॥६०॥
मूर्धाभिषिक्तं त्रिदशाधिराज्ये यज्ञेश्वरं यज्ञनयैकतर्प्यम् ।
वर्षादिदातारमुशन्ति केचिदैन्द्रा महेन्द्रं च दृशां निधिं त्वाम् ॥६१॥
हुत्वाश्रयाशं सुनिराश्रयाशमशेषदोषप्लुपण(प्लवन)प्रकाशम् ।
बर्हिर्मुखस्वस्वमुखं मखेषु त्वां तंज्ञनाः केचन विश्रमाय ॥६२॥
समासमानां समताक्रियासु क्षमं समेषां यमिनां च साम्यम् ।
अमा नयन्तं स्वयमे नमन्ति कर्मान्तकं धर्मविदः परे त्वाम् ॥६३॥

---

१. अग्निभक्ताः । उशन्तीति अनुवर्तनीयम् ।

पूर्वं निजांशं मखतो दधानं परोपदेशाद्रसराजसिद्धेः ।
सम्पूरिताशं शिव पौर्वदेवास्त्वां पूर्वदेवेश्वरमामनन्ति ॥६४॥
सुसाररत्नाकरदेशनाथं जलाशयावेशितसत्त्वमन्ये ।
नियामकं सत्त्वगणस्य नित्यं नियामयन्त्यप्पतिमीश्वरं त्वाम् ॥६५॥
त्वां प्राणनं प्राणवतां बलानां बलं विभक्तान्तरपञ्चवृत्तिम् ।
अन्येऽप्यनुच्छेदगतिं महेशमभ्याससिद्ध्येकनिधिं भजन्ति ॥६६॥
निधिं निधीनां विपदां वि[1]पत्तिकरं सु[2]दुर्धर्षतृषापकारम् ।
नीराजयन्तेऽखिलराजराजं तेजोव्रजैः पुण्यजना भवन्तम् ॥६७॥
ब्रह्मादिबीजैकविधेयसर्गं निसर्गवर्गप्रभवं भवादिम् ।
ब्रह्मेश्वरं ब्रह्मविदर्भगर्भं त्वां ब्राह्मणा ब्रह्मणि बृंहयन्ति ॥६८॥
वैकुण्ठनाथं हतकुण्ठबुद्धिं दुष्कर्मषण्ड[3]त्वकरं परं त्वाम् ।
उत्कण्ठते द्रष्टुमतीतकष्टं केषांचनान्तः परदिष्टशिष्टं[4]म् ॥६९॥
सत्सम्प्रदाये सहजे समाधौ समाहितास्त्यक्तहिताहितास्थाः ।
निर्मुक्तिमुक्ताः कमपीनमेनं कुर्वन्ति साक्षात् सनकादयस्त्वाम् ७०॥
साङ्गेन योगेन विकल्पकाख्यमतीत्य तत्पारसमाधिसिद्धम् ।
प्रसिद्धसिद्ध्येकवि(नि)धिं च सिद्धा आराधयन्त्यात्मपतिं भवन्तम् ॥
त्वां नादभक्तिप्रविभागगम्यं जडाजडान्तर्हरणैकरम्यम् ।
अगम्यमज्ञातधियो[5] गुणैः स्वैर्गन्धर्वराजा अभिरामयन्ति ॥७२॥
सप्त स्वरांस्त्रिष्वपि मूर्च्छनाभिर्ग्रामेषु संमूर्च्छ्य मुहुर्मुहुस्त्वाम् ।
प्रसाध्य वाद्यं विदितं चतुर्धा गायन्ति गेयादिगुरुं हयास्याः ॥७३॥

---

१. नाशनम् । २. अतिप्रगल्भतृष्णानिवारणमित्यर्थः । ३. अशक्तित्वम् । ४. पण्डितम् । ५. ख. 'अज्ञातधियः' पाठः ।

गेयस्य वाद्यस्य तथानुरूपं लयेन नानागतिसंश्रयेण ।
अनन्यभावाः सुरवारवध्वस्त्वां प्रीणयन्ति प्रतिशक्तिनाथम् ॥७४॥
पात्राणि नानाविधिनानुकृत्य न्यक्कृत्य शोकं हतलोकलोक्यम्
अलौकिकानन्दघनं पतिं त्वां भूताः पिशाचा अपि हासयन्ति ७५॥
प्रतिस्वयुक्तं स्वरमण्डलाद्यं(ढ्यं) वाद्यं सुनादैः परिवादयन्तः ।
भक्त्येकवश्यं निजभक्तवर्यास्त्वां नारदाद्या अपि कीर्तयन्ति ॥७६॥
स्थितिं श्रिता लङ्घितसप्तसप्तिं सप्तर्षयः सामकथाविदग्धाः ।
त्वां सामभिः सप्तभिराप्तकामा उपासते सामजवाक्यगम्यम् ॥७७॥
विद्याभिराद्याभिरनाद्यविद्याविदं विधिज्ञाः प्रतिविद्धसिद्धिम् ।
विद्याधिपं वेदकवेद्यवेद्यं विद्याधरास्त्वामभिदे विदन्ति ॥७८॥
सिद्धाश्च साध्यादतियातसिद्धिमसिद्धसिद्ध्येकविदां विवेद्यम् ।
समाधये त्वामसमाधिबाधं साध्या अधीशं वत साधयन्ति ॥७९॥
चिकित्सया तानमरानपि द्रागापादयन्तावगदत्वसिद्धिम् ।
त्वामश्विनावादिभिषग्वरेण्यं संध्यायतो हृद्यमनाधिनाथम् ॥८०॥
विश्वेश्वरं विश्वमतावभातं विश्वत्र विश्वेन च वेद्यमेकम् ।
अवेदकान्यं विधिनापि विश्वेदेवा हृदि त्वां विनिवेशयन्ति ॥८१॥
निर्वासनावासितवासनानां समासितं निर्वसनं स्ववासे ।
वसुव्रजैस्त्वां वसवोऽपि तृप्तेः सन्तर्पयन्त्येकैकहेतुहेतुम् ॥८२॥

---

१. असदृशाधेर्वा विषमाधेर्बाधा यस्मात्तम् । २. अविद्यमानौ वेदकान्यौ यस्य तम्, वेदकवेद्यरहितमित्यर्थः । ३. वासनाया निर्गता निर्वासना, तया वासिता वासना येषां ते निर्वासनावासितवासनास्तेषां निर्वासनावासितवासनानां वासनारहितानामित्यर्थः । ४. संक्षिप्तम् । ५. स्वश्च असौ वासः स्व एववा वास आत्मैव यो वासस्तत्र । ६. अत्यन्तैकान्तिकतृप्तिनिदानकारणम् ।

पट्टुं नटं चेटकनाटकानां मायाटनं त्वामपि गुह्यकौघाः ।
गुह्यातिगुह्यं परितो लसन्तमपि प्रभुं प्राप्तुमुपोद्बलन्ते ॥८३॥
भक्त्या प्रसादीकृतमेरुलङ्कं त्वदन्तिके वैरकलङ्कशङ्काः ।
सुरैस्त्यजन्तो दनुजा भजन्ते सराक्षसा धन्यतमं विभुं त्वाम् ॥८४॥
अगण्यनैपुण्यधनाग्रगण्याः पुण्याप्तसेवाग्रहसंग्रहेण ।
गणा गणानां गणराजराजं त्वां सद्गुणा नाथ सदा भणन्ति ॥८५॥
उत्कीर्णरत्नैः स्फटिकोपलेषु चित्रं विचित्रं विनिवेद्य भक्त्या ।
पश्यन्ति यत्न(यन्त्र)ज्ञमिनं स्वकीयं त्वष्ट्रादयस्त्वां सुरकारुवर्याः ॥८६॥
अनुग्रहापग्रहयोर्जनस्य संग्राहिता आग्रहमीशशक्त्या ।
त्वामेव कालेश्वरमाकलय्य ग्रहा ग्रहोर्ज्झं पथि यान्ति नित्यम् ॥८७॥
अबीजतर्वादिभवो विकासी निश्चन्द्रसूर्ये[1] खवने[2] सुशून्ये ।
त्वां भूषयत्यात्मपतिं च ताराकारोऽतितारः[3] कुसुमोपकारः ॥८८॥
दिव्याश्रये क्वापि शिलाजलेषु कुत्रापि कुत्रापि गिरौ तरौ वा ।
जनो मनस्त्राणदमिष्टदेवं त्वां प्राकृतोऽप्यर्चति विश्वविश्वम्[5] ॥८९॥
नारीभिरालिङ्गितवामभागा युक्तद्विजिह्वा[6] गुणगानशक्त्यै ।
गायन्ति शेषादिकनागराजाः शेषेश्वरं त्वां कृतशेषशेषम् ॥९०॥

---

१. चन्द्रश्च सूर्यश्च तौ निर्गतौ यत्र तत्, क्रियाविशेषणम्। सूर्ये सति पद्मादीनां कुसुमानां विकासः, चन्द्रे सति कुमुदादीनाम् । २. खं गगनमेव वनं, तत्र । ३. स ताराकारः कुसुमोपकारस्ताभ्यां विनैव विकसतीति अद्भुतम्। सूर्यालोके हि नितरां ताराभावः, चन्द्रप्रकाशेऽपि मन्दज्योतिष्ट्वमेव। तदभावे दर्शादौ तत्स्फुरणं स्फुटं नितरां विभातीति प्रसिद्धम् । ४. अत्युद्भटः । ५. विश्वस्मिन् सर्वत्र विश्वः सर्वम्, यद्वा विश्वे जगति विश्वं स एव सर्वो जगति रूपैर्घटपटादिभिः । ६. यदि ते द्विजिह्वत्वविशिष्टा न स्युस्तत्कथं गुणगानशक्तिः सम्भवेत्, तदर्थं युक्तमुक्तं ते द्विजिह्वाः ।

त्वां रूपवन्तोऽपिच वायुवेगा नानानिसर्गैः कुरु(र)गैरुपेताः
द्विधा गतौ दक्षतमाः खगानां गणाः खगेशं परिवीजयन्ति ॥९१॥
वने वने संश्रितवन्यवृत्तिः कस्तूरिकाद्यैः स्वगुणैः समिद्धः ।
मृगव्रजस्त्वां नमति प्रसत्त्यै पञ्चाननेशानमपास्तमानः ॥९२॥
सुरापगायां विहिताभिषेकं त्वामर्धभोगेन च सल्लकीनाम् ।
निजाङ्गनाबुर्बुरकादिवाद्यैः सन्तर्पयद् गायति हास्तिकं च ॥९३॥
वादानुरूपं परिनर्तयन्तः पदक्रमं स्वं सततं सदश्वाः ।
हेषाविशेषैः परिवाहनाय त्वामाह्वयन्तेऽप्रतिमं स्वनाथम् ॥९४॥
तां कैशवीं वृत्तिमुपास्य तिष्ठञ्जलाशयेषु स्वपतिं भवन्तम् ।
वार्श्चारवर्गोऽप्यनिवार्यचर्यमितस्ततोऽन्विष्यति तोषहेतोः ॥९५॥
सोमेश्वरं त्वामपि कालकूटमापादयन्तं परसोमभावम् ।
ससोममौलिं कलिकालहारं महौषधीनां नमतीश सङ्घः ॥९६॥
स्वस्वामिभावप्रथितासु तासु तास्वीदृशीषु प्रतिभूमिकासु ।
अयं परः कोऽपि परापरस्थः खेलस्यखेलैककखेलखेलः ॥९७॥
परात्मतन्त्रत्वकलाबलेन विभासितास्ताः खलु भूमिकास्ते ।
स्वाच्छादनोन्मीलनतारतम्यप्रभेदिता भेदविभेदकर्तुः ॥९८॥
एतावतीं व्याप्तिमुपागतस्त्वमंशांशिकायां भवदिच्छयैव ।
न ग्राहिता आग्रहमल्पदृष्टिनिष्ठा विदन्ति स्ववदं सुसारम् ॥९९॥
देहादिभूमावपि पूर्वपूर्वप्रमातृताव्याप्तिविमर्शसाराम् ।
विदुर्विना ते परशक्तिपातं न किञ्चनाकिञ्चनगां स्ववित्तिम् ॥१००॥

---

१. भूमौ वियति च । २. सिंहेश्वरम्, पंचमुखं विभुं वा । ३. त्यक्ताहङ्कारः । ४. गजयूथम् । ५. जलचरसमूहः । ६. अर्धनारीश्वरम् । ७. चन्द्रकिरीटिनम् ।

नीलादिकानां च सुखादिकानां विश्रान्तयोऽन्तर्मुखबोधदेहाः
त्वद्व्यक्तये त्वत्प्रथिता उपायास्तवैव तत्तद्विदि वेदकस्य ॥१०१॥
बहिर्मुख भाति यदा यदेदं रूपं स्वरूपे च तदा महेश ।
बाह्योपसंहार इहान्तरापि शान्तास्पदस्थानमिदन्त्वभक्त्या ॥१०२॥
सृष्ट्यादिसम्मेलनहेतुरेषा तुर्यैव तत्तद्धिदमुद्वमन्ती ।
हरन्त्यपि प्राप्तबला कृशा च द्विधानुभूत्येकपदा स्फुरन्ती ॥१०३॥
स्वतन्त्रतायाश्च यदा चिदात्मा व्याप्तिं निमज्ज्यैकमयीं भिदायाः
आलम्बते सङ्कुचितास्तदानीं तच्छक्तयो भान्ति न तादृशोऽपि १०४॥
मलावृतः संसरते तदैव परेश्वरोऽयं निजयेच्छयैव ।
अपूर्णतादेरभिमानकस्य[1] मन्ता दरिद्रः परशक्तिलक्ष्म्या ॥१०५॥
तथापि तद्वन्निजपश्चकृत्यमस्याहतं भाति हि लक्षणाय ।
मुहुर्मुहुः सृष्टिमुखैकहेतुराभासनाद्यं च विभास्यभासः ॥१०६॥
अज्ञातृतायां परकृत्यलक्ष्म्याः स्वशक्तिभिर्मोहितता भवित्वम्
तस्यास्तथोन्मीलनतः स्फुटं च महेश्वरत्वं निजमस्य नूनम् ॥१०७॥
अन्तर्मुखं चित्तमुपात्तसंज्ञं क्रमात् क्रमाच्चेतनभावरूढम् ।
चितेः स्वरूपं परिमृष्य भूयो विभुत्वमायाति निजं परं तत् ॥१०८॥
चिदग्निरेषोऽप्यवरोहदेशे च्छन्नोऽपि सर्वोऽपि च मेयजातम् ।
प्लुष्यत्यदः स्वानुभवैकमेयस्तत्तत्स्वरूपे कलयैव कालः ॥१०९॥
अथापि लब्धे सकले बलेऽयं निजे परस्मिन् सहजे स्वतन्त्रः ।
सदाशिवाद्यं जडभूमिकान्तं करोति साक्षादिदमात्मतन्त्रम् ॥११०॥
भूयोऽपि भूयोऽपि चिदेकताया दार्ढ्याभिमर्शात् प्रतिपत्तिमाप्तः ।
सञ्चेत्यमानेऽपिच देहमुख्यभावे विहारी परिनिर्विमुक्तः ॥१११॥

---

१. अल्पाहङ्कारस्य ।

विकल्पहानिप्रमुखा[1] इहापि प्राणप्रवाहप्रतिरोहभेदम् ।
अन्ते श्रितास्ते प्रथिता उपाया युक्तिस्थिरा मध्यविकासभासे॥११२॥
सच्चित्सुधानन्दपदानुलब्धिर्दृढा भवेन्मध्यविकासतोऽस्य ।
एकादशाङ्कस्वकलाबलज्ञः कलं कलं लालयते समाधिम् ॥११३॥
समाधिसंस्कारवति प्रकामं व्युत्थान आमर्शितया चिदैक्ये ।
पुनः पुनः पूर्णसमाधिलक्ष्म्या नित्योदितायाश्च भवेदभिज्ञा ॥११४॥
ततः स्ववीर्यैकसुसारपूर्णाहन्तापरामर्शनविश्रमेण ।
अनाश्रितस्यात्मविभोः स्वसंविच्चक्रेश्वरत्वं स्वयमाविरस्ति[2] ॥११५॥
एतावतीं स्वानुमतिं गतोऽहं त्वद्दर्शनानुग्रहलेशमात्रात् ।
दासाणुदासोऽपि महेश्वरेश त्वं तु स्वयं तद्यदहं प्रपद्ये ॥११६॥
तद् द्वापरो मे हृदये चिराय कृतप्रतिष्ठोऽस्य निवारणाय ।
पृच्छामि यत्किञ्चन तत् कृपातः क्षन्तव्यमीशाः किल भक्तिवश्याः ॥
यद्यप्यहं तत्त्वरहस्यमेतदाक्षिप्य कुर्वे शिवदानुयोगम् ।
तथापि वाच्यं प्रभुभिर्दयायै मम त्वदङ्घ्र्येकसमाश्रयस्य ॥११८॥
दासाणुदासः स्पृहयालुरस्मि प्रसादलेशाय तवैककाय ।
इति प्रतिष्ठामधिगम्य वक्ष्ये कथं न कुर्वन्ति दयां महेशाः ॥११९॥
सा देवता कास्ति परा त्वयापि यस्याः स्तवः शङ्कर राजराज ।
सञ्चिन्त्यते चेतनचेतनेन त्वत्तः किमन्योऽस्ति परः परस्थः[3] ॥१२०॥
नन्दीश्वरेणाभ्यनुयुक्त इत्थं कारुण्यवारां-निधिराप्तबन्धुः ।
जनोपकारं हृदये निधाय हसन्ननिर्वाच्यमथाप्युवाच ॥१२१॥
पृष्टं त्वया नन्दिक साधु साधु यत्त्वं गणेशस्तदियं मनीषा ।
स्वस्येतरेषामपि तोषहेतोरभ्युत्थिता ते विषये विशेषे ॥१२२॥

१. आदौ येषां ते । २. स्फुटीभवति । ३. उत्कृष्टः ।

मुहुः प्रणुन्नेन च नो मयोक्तमेतच्छिवाया अपि नन्दनाय ।
वक्ष्यामि ते सर्वहितं तथापि मदेककप्रेमविवर्धिताय ॥१२३॥
तं सान्त्वयित्वैवमुदीतहर्षः स्मृत्वा परां शक्तिमनन्तशक्तिः ।
सन्दर्शयन् व्यक्तिपदं परेशः स्मिताननः स्तोतुमनाः समाख्यत् १२४॥

स्वस्वातन्त्र्यपरानुभूतिकलयावश्यंभवित्र्योद्गते
साहिब्कौल इति प्रथावति पदे निर्माति यः स्वासनम् ।
देवीनामविलासनाम्नि ललिताचित्स्फारसाराद्वय-
भ्रातर्यत्र तदीयकाव्यनृपतौ भक्तिस्तृतीयागमत् ॥१२५॥

इति श्रीमहामाहेश्वराचार्यवर्यसाहिब्कौलानन्दनाथविरचिते
नामविलासे तृतीया भक्तिः ॥ ३ ॥

---

१. कुमाराय ।

## अथ चतुर्थी भक्तिः ।

पराङ्गं मे स्वाङ्गोत्तमसहजशृङ्गारसुभगा
नगोत्तुङ्गाभङ्गान्वयमुकुटरत्नं निरुपमम् ।
महादेवी देवासुरवरनरोरश्वरगणैः
समाराध्या साध्यैरपि परमनाद्या जयति सा ॥१॥
तदासक्तो युक्तो भवति निजयायं शिवतया
तया शक्तः शक्रादिकमपि नियन्तुं यतिपतिः ।
सदा मुक्तो भक्तो भवति दयया वा सदयया
परिष्वक्तोऽप्यस्या हतविषयसंविद्धिनिमयः ॥२॥
महाहन्तासारे गहनतिमिराटोपमिहिरे
निराकाराकारे प्रशमितविपत्तापनिकरे ।
स्वभावे सा त्वत्ताविरहविषये पूर्णविषये
निरादृश्यं दृश्यं हतपरकलं पश्यति परा ॥३॥
गता पश्यन्त्याख्यां प्रकटितपराहंकृतिपदा
शिवा तत्तद्भावोद्भवनविलसन्नर्मसुभगा ।
सदानन्दास्वादोद्यमितधिषणैरीड्यविभवा
भवाभेदप्रख्यं रचयति नवं भव्यमिह सा ॥४॥

पुनः सा स्वाहन्ताकवलिततनूमप्यतिरसात्
समाश्रित्येदन्तामपिहितजगद्भावविसराम् ।
स्फुटं तत्त्वज्ञानप्रकटितगतिर्मध्यमभुवं
गता नादोन्मेषं विशदधिषणेभ्यः प्रदिशति ॥५॥
श्रिता वैखर्याख्यां समविषमभावानुभवने
त्रयीगम्या रम्या नवनवविलासाभिरसिका ।
गुणीकृत्यात्मानं गुणगणसमाधानललिता-
मिदन्तां निर्गुण्यां प्रकटितवतीयं विजयते ॥६॥
निजोद्योतप्रोतप्रकृतिमुखसादाशिवपदा-
वधिर्जीवग्रासाद् विदलितमहामोहकलना ।
विलापय्यात्मानं दशदलशतेऽनाश्रितपदे
सुधाधारासारैर्विदितभजिता तर्पयति सा ॥७॥
न यः प्राणायामैर्विविधविधिबन्धातिगहनै-
र्न वान्यैर्योगाङ्गैः क्षणमपि लयं याति सुधियाम् ।
तदुन्मेषात् सोऽपि प्रसभमभियातः प्रविलयं
महामार्गे[1] प्राणो जनयति परानन्दमतुलम् ॥८॥
इयं ज्वाला किञ्चित् खपदमुपयाता किमथवा
प्रयातं खं ज्वालापदमिति सतां विस्मयकरी ।
विलापय्यापानं द्विशिखमभितः प्राणकुहरे
तमात्मन्येकाकिन्यमृतरसिकेयं विजयते ॥९॥
महीं तोये तोयं हुतवहपदे तं च पवने
तमाकाशे तं वा मनसि च मनो नादसरणौ ।

१. सुषुप्तिमार्गे ।

विधायैनं बिन्दौ विलयगतमेनं निजपदे
शिवा ज्योतीरूपा रहसि रमते सा स्वपतिना ॥१०॥
सुधास्वादोन्मत्तान् विगलितमहामोहगहना-
नवेक्षन्ती नाथानकथपरिपाट्या श्रितपदान् ।
नयन्तीयं तांस्तानधिपतिवरान् स्वस्वविषये
परां तृप्तिं भूयः श्रयति सुखमात्माश्रमपदम्[1] ॥११॥
उदीतैषा भावात् परमविभवाद् भावविकला-
दभावाभाव्याद् वा किमपि च भवद्धात्रमभिदा ।
भिदेवाविर्भाव्य प्रथयति गुणत्वं गुणगति-
र्गुणास्पृश्या स्पृश्यं चिदभिगणनाहीनगणना ॥१२॥
शिवाभासे शक्तिः परशिवपदे तन्मयनया
महाविद्या सादाशिवभुवि महेशानविषये ।
महामाया माया पशुपतिदशायां बहुकला
महन्मुख्यप्रख्या निजमियमुपाख्याति विभवम् ॥१३॥
अनुत्तीर्णाकीर्णा त्रिकमयविदैक्येन विशदा
परं तत्तत्त्वं परमिव परानन्दसुभगा ।
सिसृक्षुः स्वातन्त्र्यान्निजममलखेलं बलकलं
स्वभित्तौ स्वेनैव प्रतिविभववेद्यं विधिविधिः ॥१४॥
निजानन्दस्पन्दोद्वमनमतिगाढं विदधती
कृतान् भावांस्तेन प्रतिपदमलं मिश्रितवती ।
स्वयं सम्भारादिः स्वयमपि महाशम्बरकला
स्वयं तत्तन्मोहं व्रजति परमैषा मयि निजे ॥१५॥

---

१. क० 'श्रयपदं' इति पाठः ।

अवारूढा स्वीयात् सपदि च पदात् सम्पदपदे
विकल्पानां भूता प्रतिमतमतं काममभितम् ।
विधायेच्छाकल्पा कलयति कलाकौतुककलां
कलाकौशल्येऽस्मिन् समभिनवचिन्तामणिरियम् ॥१६॥
गतात्त्वं वाचामविषयगतौ भानविषया
परा वाणी प्रादुष्कृतपरमशब्दार्णववपुः ।
जगद्भेदस्याप्त्यै तमपि च जगद्वृत्तिविधये
विधात्री संसेव्या स्वविदि विधिना सैव विधिना ॥१७॥
तया ब्राह्मचा सृष्टिं सृजति विधिरिन्द्रावरजनि-
रिमां वैष्णव्या वावति हरति रौद्र्यापि च हरः ।
पिधत्ते चैशान्येश्वर इह महाशक्तिकलया
सदाशम्भुः स्वात्मन्यकलमनुगृह्णाति कलयन् ॥१८॥
उमा कौमारी सा गिरिवरसुता काचन शिवा
ददातीष्टां सिद्धिं मदुपममतिभ्यो मतिमपि ।
परां शान्तिं भ्रान्तिप्रतिजनिततान्तेर्विदलने
परां सारोद्धारां विमलललितं मङ्गलमलम् ॥१९॥
समुन्मेषात् तस्या जगदुदयमेति प्रतिपदं
यथा बीजाभानावयवकलनो भूरुहगणः ।
निमेषादप्यस्तं व्रजति सहसा नैक्यविमलं
मयूराण्डाभ्यन्तारस इव परं चन्द्रककलाः ॥२०॥
तया तास्तास्तन्वो निजजनदयायै प्रकटिता
हितारम्भाः सम्भावितभुवनरक्षापरिकराः ।

---

१. स्वभक्तलोककृपार्थम् ।

विधाता या दृष्ट्वा समभिनवसर्गैकविषयाः
स्वकीयं वैधात्रं श्रममिव कृतं वेत्ति विफलम् ॥२१॥
इयं तासां काचित् परममुकुटं शोभयति मे
परार्धाङ्गं गङ्गामुकुटजयिनो भक्तशिवदम् ।
श्रितस्यात्मानन्दं परममपि मृत्युञ्जयपदं
निराकारज्ञप्तेः किमपि च महाकारविशदम् ॥२२॥
अहं शक्तीशानोऽपि च नहि विवेक्तुं परिचयात्
तदीयं तद्रूपं वितुलविमलं केवलबलम् ।
मुखैः ख्यातैः शक्तः स्वयमपि गिरामीशपदवीं
प्रयातः साकल्यादकलकलनः कालकलनः ॥२३॥
अतो जानंस्तस्यास्तदिह गदितुं सैव विरला
परा शक्तिः शक्तेत्यपि परिसमाख्यातुममलम् ।
यदारम्भं कुर्वे सततममितं सम्प्रकलये[1]
तदेषाहं सोऽहं त्वियमिति हि विश्वेश्वरवरः ॥२४॥
रहस्यं मेऽप्येतत् परहृदि विदित्वापि भवता
परं गोप्यं गोप्यं[2] सकलसततविष्कृतमलम् ।
स्वरूपं सद्रूपं मयि परिणतं रूप्यविभवं
ममास्याः कस्या अप्यतिविमलभक्त्युक्तिविषयम् ॥२५॥
अनन्तालङ्कारं परगुणधरं सद्रसवरं
बहूद्भावं शक्तिप्रथमविभवं शब्दविषयम् ।

---

१. वितर्कयामि । २. विशेषणक्रियाविशेषणं गोपनीयम् ।

महामेयं दोषोज्झितमिदमहं वक्तुमखिलं
क्षमो रूपं चैतद् वरदमपि वः[1] पादभजनात् ॥२६॥
कचानस्याः शस्यान् बत[2] कलयतश्चेतसि मम
भवत्यान्ध्यं स्वात्मापरमतिहरं तत्क्षणमथ ।
सदा दृष्ट्वा कृष्णान् विशदकरसङ्घं विकिरत-
स्त्रिधाम्नां धामत्वं समधिगतमेवाक्षिकमलैः ॥२७॥
कचानेवैतस्याः परशिवपदोऽहं श्रुतिपदे
समालोक्यावोचं सपदि तम आसीदिति वचः ।
परामृश्यानन्दोद्धरणचतुरान् कानपि परान्
पुनः पूर्णानन्दं सदिति च रुचा घूर्णितगतिः ॥२८॥
कचेभ्योऽप्येतस्याः समधिगतवानस्मि बहुता-
परं सौक्ष्म्यं पूर्णायतिमपि[3] विभुत्वस्य परितः ।
सदैवान्तेवासी गुरुवरभरेभ्योऽपि च तथा
तथा कालं वर्चः कचितकचितं निश्चलचलम् ॥२९॥
महाकालेशत्वं मम निरुपमं कार्ष्ण्यमचलं
हरेर्भक्तिव्यक्त्या विततविशदाभ्यन्तरगतेः ।
कृतं पूज्यैः पूज्यं बहिरतिहितं वीक्ष्य चिकुरै-
श्चतुर्वक्त्रैर्धाता तदधिगतये स्तौति किमलम् ॥३०॥
कचा अस्या व्यस्ता गमयितुमलं नैक्यमपरं
समस्तास्ते शस्तास्त्रिदशपतितां ज्यावलिवृताः ।
अतोऽहं सः ख्यातः सकलकलतामेकतलतां[4]
समस्ते वा व्यस्ते सहजविभवेऽस्मिन् कलयितुम् ॥३१॥

---

१ वो युष्मभ्यम् २ आश्चर्ये ३ सकलविशालत्वम् ४ ख. 'कलतां' पाठः ।

कचान् मुक्तान् दृष्ट्वा व्रजति वत बन्धं मम मनो
विनिर्बन्धैः काम्यं हतपरगति प्राप्तसुपदम् ।
स्वयं बद्धा हस्तैः झपदि सहजां वेणिविधिना
विनिर्मुक्तिं चास्या अबहिरिव बाह्येऽपि विषये ॥३२॥

भजन् केशेशानान् विमलवितुलान् केशपतितां
गतोऽहं चैतस्याः सततममितामन्तकहरः ।
अतः केशाः केशा अहमपि महेशः परपर-
श्चिदाकाशे काशे विशदविभवे भास्करकरः ॥३३॥

कचेभ्यो यत् सत्त्वं विशदकिरणेभ्योऽपि च रजः
प्रसिद्धेभ्योऽप्यसद्धृदयपदवीरञ्जनतया ।
तमः कृष्णश्रीभ्यः प्रभवति तदेतद्भजनत-
स्त्रिदेवीमूर्त्यैकस्त्रिविधविधिकृत् सोऽहमुदितः ॥३४॥

इमान् केशेशान् यन्मम हृदयमाविश्य बहुशो
बहिःस्थं प्रत्येकं मुखमुखपदे बालनिकरात् ।
तदेतद्व्यक्तीशं यदि खलु लभेताप्यपरथा
स्थितिं तत्तत् किं स्यादिति कलयितुं नास्मि सकलः ॥३५॥

शिरोव्योम्नि न्यस्तं कचतिमिरवृन्दं नयनगं
रविं शत्रुं सीमन्तमुखकृतमावर्तितमलम् ।
तृतीयाक्षिज्वालारुणितमपि सिन्दूरवपुषं
किमस्या उद्युक्तं शसितुमुचितं दण्डसुदृढम् ॥३६॥

विलोक्य स्वर्गङ्गां मम शिरसि सङ्कर्षणधिया
कचव्रातैर्भूता किमु जलधिमूर्धा भगवती ।

---

१. वत हर्षे । २. अहं भासे ।

यदेतेऽन्तर्देवद्रुमकुसुमवृन्दैः परिलसत्-
तरङ्गश्रीबन्धा दधति खलु रत्नाकरकलाम् ॥३७॥
कचानां वेणीयं लसति वरनागीव रमणं
मयाङ्गे बद्धं स्वं मृगयितुमिवातित्वरयती ।
पराङ्गादारूढा शिरसि कचविन्यासकरिजो(रणो)-
ल्लसज्जिह्वा दृष्ट्वा परिहृतगतिर्वासुकिमिमम् ॥३८॥
तुलां वालाग्रेण श्रयितुमिव केकी जलधृति-
व्रतापापोऽप्यस्यास्तनयवहनादागसि भयम् ।
विविच्याथाजानन् वदति नु कलापं स्वमपुर-
स्कृतं निन्दन् ह्येतत् प्रियमिति मुहुः पक्षिपशुराट् ॥३९॥
त्रिलोकेभ्योऽपास्तं कचतिमिरराजं त्रिभिररं
शिरोदुर्गोन्नद्धं भजनविजितश्लाघ्यविषयम् ।
कृतव्यूहैस्तेजःपतिभिरुचितं पक्ष्मकिरणा
अधः क्षिप्ता दृष्ट्वा कुसुममुकुटाढ्यं नयनगैः ॥४०॥
प्रतिस्वं धामेशैस्त्रिभिरुदयदिष्टे त्रिभुवनात्
कृतावासं केशे तिमिरमभिनिष्कासितमिदम् ।
कृतद्वारारोधैरपि सपदि पश्चात् प्रचलितं
भ्रमद्भिर्भूयोऽपि स्थितमिह विलोक्यावृतजगत् ॥४१॥
प्रसाध्यैतान् बालांस्तिमिरवपुषः स्वेदसलिलं
हृतास्थानान् बालान् त्यजत इव बाष्पं समुचितम् ।
स्वहस्तैः संस्कारैरभिरचितसाम्नो रुचिपतीन्
रिपूनामुञ्चत् किं सहृदयवरैः पक्ष्मभिरियम् ॥४२॥

किमेतैः सदूबालैरभिलपितखेलैः पदगतैः
कृतां याच्ञां मत्वा क्षमगतिरुपप्रापितवती ।
रविं चन्द्रं मध्येऽप्यनलमनयोः स्थापितवती
प्रयातां मा म्लानिं मुहुरतिकरस्पर्शत इति ॥४३॥

अगैः[1] स्वेनात्मीयः कुसुमनिकरो निर्जरपति-
द्रुमैर्माल्यव्याजात् प्रहित इह केशेभ्य उचितम् ।
सुसूक्ष्मं दीर्घत्वं निपतति पदोः शिक्षितुमल-
मशक्त्या संम्लानस्तदभिगमने ह्रीण इव किम् ॥४४॥

घनान् केशानेतांस्तुलयितुमिवाटोपविकटा
घना अभ्युद्युक्ता मुकुटविधुनानामणिकरैः ।
लसद्भासः सम्यक् चपलचपला नाप्ततुलना-
स्त्यजन्ति क्रन्दन्तो बहुसलिलबाष्पं स्वविषये ॥४५॥

इमं[2] दृष्ट्वाहीन्द्रग्रथितसुजटाटोपमुकुटं
कचाः सोमासङ्गानुगतकवरीपुच्छलसितः[3] ।
धृतोऽहीन्द्रो राहुः किमिव शिवया यत् स्वपुरतो
गतौ वह्निं कृत्वा रविहिमकरौ पक्ष्मशरणम् ॥४६॥

अमानोऽन्तः कृच्छ्राद् बहिरिव तुलायै परिचलो
विनिर्गच्छन् पश्चादमरचमरैर्बालनिचयः ।
प्रमार्ष्टुं तन्मन्तुं व्यजनविधये देववनिता-
करे बालेशानां प्रहित उत नीराजनधिया ॥४७॥

---

१. गमनरहितैः । २. मां शिवम् । ३. ललाटस्थचन्द्रसङ्गमानुयातवेणी एव केतुस्तेन समुल्लसितः ।

गतैर्मुक्ताभावं गगनमणिभि[1]स्त्रिगुणमयी
    ललन्तीयं देव्या हरति मम चित्तं सुरसरित् ।
किमत्रासङ्गे हा तपनतनयायाः[2] कचतते-
    र्ममेत्तायै किं वाभिमुखमुपयाता त्रिपथगा[3] ॥४८॥

ललन्तीव्याजेनाहिमहिमकरग्रासभया
    ग्रहा नानोद्योता मणिविरचना राहुचिकुरान्[4] ।
अनुद्गच्छत्केतुप्रबलकवरीभारललितान्
    किमायाता नीराजयितुमभिसत्कारविधये ॥४९॥

विधुं कृत्वा किंस्विन्मुकुटविधये केवलकलं
    वपुः शिष्टं साम्ने प्रकटितमिदं भालफलकम् ।
यतो निर्गच्छन् मां श्रमजलसुधाबिन्दुनिवहोऽ-
    भिषिक्तं सम्पूर्णं विरचयति मृत्युञ्जयपदे ॥५०॥

विधुर्याञ्चां कृत्वा मुकुटवपुषा पेशलकलां
    सुवक्रत्वं किं वा गुरुकचचयात् प्राप्तमुदितः ।
अतः कार्ष्ण्यं प्राप्याधिकमपरमन्तःसुखकरं
    कलङ्कव्याजेनावहति गुणमन्यानधिगतम् ॥५१॥

सुधावर्षैः सम्यङ् मुकुटशशिना जीविततनुः
    स्मरः पाशं लब्ध्वा विशदकचपाशं ग्रथयति ।
रिपुं मां दृष्ट्वैव प्रथितविजयो यत् क्षणमपि
    विहायैनं[5] यातुं परत उचितं नैव विषहे ॥५२॥

---

१. तारकाभिः । २. कचततिरूपायाः कालिन्द्याः । ३. त्रिभिर्मार्गैर्गच्छन्ती । ४. राहुतुल्यकेशान् । ५. केशपाशम् ।

कचेशानामेषां सविधमुपयामीशि सुषमां
न जात्वेवं तिर्यक्श्रवणमुखयैतान् निगदिता ।
ललन्त्या किं देवद्रुमकुसुमरत्नैर्धृतव्रती
सितायै भासे त्वा विधुमुकुटमेषां धृतवती ॥५३॥
तनोर्दानान्नित्यं सकलविबुधेभ्योऽमृततनुं
कलाशेषं तुष्टा घटितमणिनिःसंख्यकिरणाम् ।
द्विजानां राजानं विततसदयोर्ध्वस्थितिमियं
विनिर्जेतुं किंस्विद् दशशतकरं निर्मितवती ॥५४॥
कलापादाप्याग्रे चिकुरनृपतेः कोमलकलां
कलापो मायूरः प्रथित इह भूतो भुवि पराम् ।
प्रियं स्तुत्वा तस्मिन् सततविलसच्चन्द्रकमपि
कथञ्चित् तं केकी समधिगतवांश्चन्द्रकमपि ॥५५॥
कचानेतांश्चेतः शतशकलवृत्ति प्रतिपथं
प्रविश्यान्तर्ध्वान्तप्रतिहतविनिर्याणमभितः ।
मयान्वेष्टुं धामत्रितयमिदमात्मीयनयन-
त्रयं भासे युक्तं मुकुटतुहिनोस्रेण विधृतम् ॥५६॥
प्रविश्यान्तः केशान् मम मन उपात्तोत्तमसुखं
निजां वृत्तिं हित्वाहितविततविश्राममभिदम् ।
बहिर्निर्याणाय स्वयमिह मयाकारितमपि
मुखाग्रस्थेनैतन्मुकुटशशिना मां हसति किम् ॥५७॥
किरीटस्त्रिः कूटैर्विलसितरुचिर्मध्यगशशी
लुठच्चूडारत्नो दिशति बत मे मेरुधिषणाम् ।

१. देवी । २. देवी । ३. केशम् । ४. प्रकाशाय ।

सुपर्वाणो बालाः प्रथितयशसो निर्जरतया
यदन्ते राजन्ते सततसुमनःसद्गुणधराः ॥५८॥
शिरोवल्गाभूषा परिलसति मुक्ताभिघटिता
किरन्ती स्वज्योत्स्नाः प्रबलकवरीभारतमसः ।
मिथः पश्चादग्रे मुकुटशशिमुख्यद्युतिमतां
स्वदुर्गे सीमान्तो रचित इव शक्त्या कलिहरः ॥५९॥
इयं वल्गाभूषां वहति रुचिरां रत्नखचितां
ललन्त्या संलग्नां त्रिपथविसृतां भावविशदा ।
शिवा गङ्गाभावं समुदितमतिव्याप्तहृदया
रसैकत्वे सन्दर्शयितुमिव मे नीतिनिपुणा ॥६०॥
सवल्गाभूषैषा विकचकचभासा यमुनया
ललन्ती मे मिश्रा सुरसरिदिवोत्प्लुत्य शिरसः ।
यतो वेणीस्थाने द्विजपतिरयं केवलकल-
स्तपन्नङ्कोन्मुक्तो मणिमयकलेशत्व उदितः ॥६१॥
इदं भालं मुक्तं ग्रहरुचिकचानां कवलना-
च्छशाङ्कं शङ्केऽहं प्रकटितबृहद्भानुमुदरात् ।
कुरुक्षेत्रे वक्त्रे व्रतकृशतनुर्मज्जनधिया
सरस्वत्यां मुक्ताश्रियि निपतितो यद् द्विजपतिः ॥६२॥
कदाचिद् वा ज्यौत्स्न्या भुवि ललनया वापि च कदा
तमस्विन्या योगादधिगतकलङ्कः शुचिरुचिः ।

---

१. अपृथग्भूतम् । २. राहुरूपकचानाम् । ३. सितकरः ।

उभाभ्यामेताभ्यां चिकुरवरभालस्थलतया
प्रभाताभ्यां[1] ख्यातः सममिह न युक्तः किल तथा ॥६३॥
इयं वल्गाभूषा मुकुटशशिना केशमिषत-
स्तमिस्राया भान्त्याः कथमपि समुल्लंघ्य विहितम् ।
विधात्रा दुर्योगं निजसहजरूपस्थितिजुषः
समाक्षिप्ते वा[2]लिङ्गितसुखकृते बाहुलतिके ॥६४॥
विनिर्गच्छत्कीलं युग[3]हतिषु भालस्थनयनं
सदा त्वन्तर्दीप्त्या बहिररुणमीषद् विलसति ।
यदेते सुस्निग्धाः कचभरचया राजिवितता
अनूद्याता धूमा घनगतिमिता वातलुलिताः ॥६५॥
बहिर्वर्णेनैवारुणमलिकनेत्रस्थितमिमं
कथं चित्रं वह्निं प्रसृततुहिनोस्रं न कलये ।
यदालोक्यैवैनं स्मरजनिततापक्षतिररं
ममान्तर्यद्वेतिर्मुकुटविधुरूपाप्युदयते ॥६६॥
तृतीयाक्ष्यम्भोजं यदिह सततं निर्निमिषितं
किरीटावासस्याप्यमृतकिरणस्यास्य सविधे ।
सजातीयायाक्ष्णे मुनिनयने[4]पाथोधिजनुषा
स्वकुल्यायाब्जायातिसहितमनेनै[5]व विहितम् ॥६७॥
निमेषं वोन्मेषं प्रतिवहत एतौ रविविधू
अनालोक्यैवाब्जोत्पलविकचलक्ष्मीं भुवि समम् ।

---

१. प्रकर्षेण शोभिताभ्याम् । २. व इवार्थे । ३. कल्पान्तेषु । ४. अत्रिनेत्रक्षीरनिधिजन्मना । ५. सुधांशुना । क. ख. 'सहित-मननैव' पाठः ।

इदं नेत्रं बाह्येऽप्यबहिरुभयश्रीविहसनं
स्थितौ पश्यन्तौ तौ हतपरगती निर्निमिषितौ ॥६८॥
इदं नेत्रं भालस्थलकमलमन्तःकुवलयं
तमस्विन्यां[1] केशेष्वपि तुहिनभासोऽपि[2] सविधे।
विकासेनात्यर्थं सततमसितैः पक्ष्मनिकरैः
श्रितं दृष्ट्वा चित्रं किसलयनिभैः को न लभते ॥६९॥
सुविस्तीर्णे भाले कृतविषयमेतौ शशिरवी
अधः कृत्वा हर्षाद् विकसितमिवेदं[3] सुनयनम्।
तथाप्येनामल्पां कुटिलविधुलेखां मुकुटगां
समालोक्यामर्षादरुणमिव बाह्येऽन्तरसितम् ॥७०॥
अमुष्मिँल्लावण्यामृतसरसि भाले विकसितं
किमप्येतन्नेत्रं कमलमरुणं चित्रजनकम्।
विहायान्या वृत्तीर्मम परितताः पक्ष्मवपुषो
मनस्तारारूपो भ्रमर इव यद् बन्धनमितः[4] ॥७१॥
किमेतन्माणिक्यं[5] स्फटिकदृषदं भालमुदराद्
विनिर्यातं भित्त्वा खनिमिव घनाटोपविततान्[6]।
कचानासाद्यैतान् सततमुदितानञ्जनमयीः
शलाकाः पक्ष्माणि श्रितमबहिरुद्यच्छितिमणि ॥७२॥
इदं नेत्रं नेत्रं[7] परिविलसितं बालनिकरै-
र्ममान्तर्बन्धायोदितमिह[8] न वा जालकमयम्[9]।

---

१. कार्ष्ण्यात् केशानां तमस्विनीत्वम्। २. चन्द्रमसोऽपि। ३. भवति। ४. प्राप्तः। ५. नेत्रं भवति। ६. मेघाडम्बरविस्तीर्णान्। ७. पाशरूपरज्जुः। ८. चित्तबन्धाय। ९. वागुरारूपम्।

यदन्तर्मेऽधीनं हतपरकलं देहकलना-
क्षमं कृत्वा देहं हरति चतुरं सापि नहरः ॥७३॥
विवृद्धं किं नेत्रं सकलमभितो व्याप्तुमलिकं
सितं बालारोधात् समुदितरुषा भात्यरुणितम् ।
अतो मान्या बालाः शिरसि विधृता दीर्घगतय-
स्त्विदं ताराचिह्नं हतनिमिषितं मानविकलम् ॥७४॥
अतो भीताश्चौरा इव किल सपक्षा अपि सदा
चकोराः कं[२] हित्वा विजनविपिने यान्ति चटुलाः ।
जलक्षोभात् पङ्कोद्भवमपि[३] मुहुश्चञ्चलशिर-
स्तुलां प्राप्तुं नैव क्षममहमनेनेति वदति ॥७५॥
चकोरश्चित्तं मे नयनवपुषा निश्चलतरो
घनैः पक्ष्माकारैरभिविलसितः पक्षनिवहैः ।
द्विधा चन्द्रस्यान्तः शिरसि च गतो वामनयने
पिबन् ज्योत्स्नां रागी विहितवसतेर्माद्यतितराम् ॥७६॥
समालोक्याजय्यं कुसुमशरभृन्मां प्रहरणैः
परैः पालीयुग्मं कुटिलकरवालस्य युगलम् ।
बभारेदं येन प्रसभमभितो मां हतगतिं
चकारेवाभीतं युधि निजनिदेशस्य वशगम् ॥७७॥
बहून् यूनो हत्वा धृतबहुकलङ्कं धनुरिदं
सुकृष्णं मुष्यन्तःस्थगितमतनोर्भ्रूयुगलकम् ।
शरान् सन्धायैतान् युगपदभितः पक्ष्मनिकरा-
ननेनैवाशुग्ने मयि न कृतकृत्यः सृजति सः ॥७८॥

---

१. एतस्मात् नेत्रात् । २. सुखं जलं च । ३. पङ्कजम् ।

परं कार्ण्यं तेभ्यो निजकरणतः प्राप्य मुदितं
धनुः शौनःसीरं किमु भवति पालीयुगमिदम् ।
कचानां मेघानां स्थितिमचलितां वीक्ष्य शिरसि
सितं मध्ये श्रित्वा सहजगुणमेकं स्थिरतरम् ॥७९॥

विलोक्यानुष्णोस्रं शिरसि नयने वा स्थितमिमं
द्विधाङ्केनाप्याप्ता स्थितिरिह पृथग् भ्रूयुगलके ।
श्रितश्रेणीरूपा कथमपरथैतौ हिमकरौ
प्रयातः साकल्यात् किमपि सुषमामङ्कविकलाम् ॥८०॥

सुविस्तीर्णे भाले स्थितमिह विजेतुं नु शिखिनं
विलोक्योत्पक्ष्माणौ शितसितकरौ किं समुदितौ ।
लताभिर्धूमानामुचितमनयास्यैव रचिता
वृतिः पालीयुग्मं कलहलयकृत् सीमविधये ॥८१॥

त्रिधाम्नां किं पालीं विशदकिरणां वीक्ष्य तमसा
निजं पालीयुग्मं युगपदुदितं संप्रकटितम् ।
इयं पाली सत्यं भवति मम वा पालकतया
रिपोश्चापौन्मुख्येऽपि च न यदहं मृत्युवशगः ॥८२॥

कलापैर्मुक्तानां कुटिलविधुना तुल्यतनुना
विधायैतन्नेत्रं विशदमुपरिस्थं ममुकुटम् ।
शलाकाभिः साम्ने मम दयितया भ्रूयुगमिदं
कृतौ मौली अक्ष्णोरपि शितिमणीनामपरयोः ॥८३॥

कटाक्षाणामेषां मणिविरचितः कांचन सदा
श्रियं धत्ते यस्मादलिकतिलकः काञ्चनमयः ।

---

१. चन्द्रमसः कलङ्केन । २. वह्निम् । ३. कामस्य ।

विकासस्योपान्ते मधुरुचिमतां याति तिलकः
कटाक्षैर्व्याकोशं तदिति कविवाक् सत्यविषया ॥८४॥
उभौ शीतोष्णांस्रौ युगपदुदितौ वीक्ष्य बलिनौ
सखायं किं वह्नेस्तिलकमलिकेऽसौ धृतवती।
विशिष्टं ताराभ्यः कृतपररुचिभ्यः समुदितं
समुच्चित्यापूर्वं तिलकमकरोद् धाम किमु वा ॥८५॥
त्रिनेत्रैर्युक्तं मामतिशयितुमेभ्यः परमुत
बिभर्त्येषापूर्वं विविधकिरणं नेत्रतिलकम्।
जयार्थां वा मुद्रां त्रिरुचिपतिभागैरभिनव-
ग्रहाङ्कां कन्दर्पो वहति किमिमं कान्तकरणः ॥८६॥
भ्रुवावग्रे भुग्ने युगपदुपयातेऽस्य शरणां
सपक्ष्माऽऽत्राभ्यां त्वं भव तिलकनेत्रेति किमु वा।
त्रिलोकीनामस्या उपरि तिलकस्यापि तिलकः
समादत्ते लक्ष्मीं परमिह न सर्वोपरि कथम् ॥८७॥
इदं भालं क्षीरोदधिसुत समालोक्य जनकं
स्थिरं प्रेम्णा तिष्ठत्यपि सुतिलकः कौस्तुभमणिः।
न चेदेवं लक्ष्मीः कथमिह विहायान्यविषयं
ससोदर्यप्रेमा स्थितिमुपगता निश्चलतराम् ॥८८॥
अमूभ्यां नेत्राभ्यामभिनवविधिभ्यां सुषमया
चतुर्भिर्वक्त्रैः स्वैर्मृगयति दिशः सर्वत इव।
तुलां द्रष्टुं कल्पं क्वचिदपि विधिर्जाग्रदनिश-
मनाप्यैनां भूयः स्वपिति ननु खिन्नः सकलनः ॥८९॥

इमे नेत्रे हेम्नो मधुचपकयुग्मं स्वकिरणान्
किरन्ती क्षीवत्वं बहिरुभयतोऽपूर्वमबहिः ।
स्फुरन्नीलाम्भोजप्रसवरुचिरे अर्धहरणं
सुखं मन्ते त्रस्तां कथमपरथा घूर्णिततरः ॥९०॥
इमे ते लावण्यामृतमधुमये केऽपि सरसी
प्रणालीभिः पक्ष्माकृतिभिरुपसंसिञ्चत उत ।
निजाङ्गानीमं वा सरससरसानि प्रतिमुहु-
र्यदेतानि प्राप्तो यदहमपि वैतृष्ण्यमतुलम् ॥९१॥
अमूभ्यां नेत्राभ्यां परमसहमानानि रुचिरं
प्रकाशं[1] पक्ष्माण्यादधति खलु वा कालिमगुणम् ।
प्रयातान्याशङ्कां नियतनिकटस्थान्यपि ततो
निमेषं नो यान्ति स्वपदपरिरक्षातिचतुरम् ॥९२॥
इमे नेत्रे नागोद्भवविधुजलान्तः शितिमणी
सुपात्रे मारस्यानुजयमभिषेकाय वितते ।
बहिर्दूर्वाग्रैः किं समभिलसिते पक्ष्मनिवहै-
र्यदस्मै छत्रस्य श्रियमुपवहन् भाति तिलकः ॥९३॥
न पर्याप्तं पद्मं कुवलयमपि प्राप्तुमुपमां
पृथग्यद् वामाक्ष्या नयनविषयां तद् द्वयमिदम् ।
समेतं कृष्णाभैः किसलयगणैः पक्ष्मरुचिरैः
स्वबन्धुभ्यां यातं शरणमनयोरेव युगपत् ॥९४॥
इमे मीना दीना इव नयनसाम्यानधिगते-
र्जडत्वेऽन्तर्लीनाश्चपलगतयो नष्टरतयः ।

---

1. क्रियाविशेषणम् ।

अतो मीनाङ्कोऽयं जगति मदनः ख्यात उचितं
गतोऽनङ्गत्वं किं श्रयति मधुनैवैकसखिताम् ॥९५॥
शुची हास्योल्लासे करुणदयया प्रोद्यतकरे
रुषा जुष्टे रागादिव भयकरे दुर्मतिमतः ।
समश्लाघ्ये चित्राकृतिवरतरे के अपि दृशौ
रसं शान्तं पूर्णं रुचिररुचिरं मे वितरतः ॥९६॥
प्रयातः खञ्जत्वं तुलयितुमिमे खञ्जनपतन्
स्वपक्षीयाल्लौल्यात् स्थिरतरविलासे नु नयने ।
न मार्गं वा मार्गं व्रजति मसृणं तु प्रतिमुहुः
परीवृत्त्योप्लुत्या भयचलदृशा श्रोत्रहतया ॥९७॥
अमायां सूर्यान्ते व्रजति हिमधामा नहि रुचिं
तदन्यस्यां पूर्णामपिच तदिदं ख्यातमिह तु ।
न सिद्धं सच्चिह्नं किमु समुदिते ते तिथिवरे
यतो दृष्ट्वा देवा अपिच परितृप्यन्ति पितरः ॥९८॥
अमा नाऽमा किंस्विद् भवति किमु पूर्णैव यदमू
इहान्तःस्थौ सम्यक् शितसितकरौ धामरुचिरौ ।
यदेताभ्यां सन्धिः समधिगत एवेह च दृढं
ततः सन्ध्यां वह्निः प्रकटयति सत्यं स्वविषये ॥९९॥
इतो राजख्यातिं गत उचितमेवार्णवजनु-
र्यदुष्णोस्रस्यान्तेऽप्युदितरुचिरङ्केन विकलः ।
कलापूर्णो नित्यं भवति रविणापि प्रकटितं
विहायाघं मैत्र्यं ग्रहविलयजं चन्द्रसुरुचेः ॥१००॥

---

१. मृगसमूहः । २. क. ख. 'शिरसितकरौ' पाठः ।

इतस्तारां प्राप्य प्रमुदितकलो धामविशदो
रवेरन्ते तिष्ठन्नपि यदहहाऽस्ति द्विजवरः ।
अतस्तारानाथो ननु विनिमयेनापि सततं
तथा तारा एवाप्यनुपतति सोऽयं गुणरुचिः ॥१०१॥
क्वचिच्छुक्ले श्यामे क्वचिदरुणवर्णे क्वचिदपि
क्वचिन्नीलाब्जाभे क्वचिदपिच पीताङ्करुचिरे ।
क्वचिन्मिश्राभासे विविधकिरणैः क्वापि लसिते
न निर्णेतुं शक्ये नयननयने के अपि कथम् ॥१०२॥
इमे दृष्टे येन प्रतिनियतपुण्यैककलया
न तस्यान्यद् दृश्यं व्रजति विषयं जातु कलितम् ।
विविक्ता तद्दृष्टिर्ह्यनुभवति भावं तममलं
स्पृहां यस्मै सर्वे विदधति महादृष्टिपतयः ॥१०३॥
इमे वक्रे दृष्टी हरत उत वक्रत्वममलै-
र्युते वर्णैर्वर्णप्रभृतिकलनां निर्निमिषिते ।
भवोन्मेषं भूयः श्रितपरगुणे वा गुणगती-
रुते द्वैतं हार्दं विततलसिते वृत्तिविततिम् ॥१०४॥
इमे दृष्टी दृष्टे अधिगतरुची साञ्जनतया
प्रसादं कुर्वाते सहजनिजनैरञ्जनपदम् ।
स्तुवत्येते वाणी कविवरपतेर्व्यञ्जनतया
निजं न प्रागल्भ्यं प्रथयति कथं व्यञ्जनतया ॥१०५॥
प्रभाज्योत्स्नासक्ताविह रविविधू वीक्ष्य बलिनौ
सदा च्छाया तम्यप्यलकवपुषा किं प्रकटताम् ।

गते पश्चाद्भागं सकलमथवा व्याप्तुमुदितौ
निषिद्धौ सङ्गत्यायलककलयान्योन्यमनया ॥१०६॥
शिरोदुर्गे स्थित्वा कचतिमिरराजेन हतये
प्रवेशस्य श्रुत्योः प्रहितमुत सेनापतियुगम् ।
प्रयोद्धुं सांमुख्ये रुचिररुचिपत्योरलकतां
श्रितं नो चेदेवं हतविततयानौ कथमिमौ ॥१०७॥
त्रिभिर्यान्तीं मार्गैर्मम शिरस आलोक्य यमुना
कचश्रीः स्वर्गङ्गामलकयुगवेणीभिरुचितम् ।
त्रिमार्गा संवृत्ता किमु किमु च वेणीव भुजगी
रसासिक्ता सूतेऽलकभुजगयुग्मं स रुचिरम् ॥१०८॥
इदं युक्तं हंसद्विजपतिसमीपे भ्रमरकैः
सपक्षैः संस्थानं विहितमिह विच्छित्तिरुचिरम् ।
विवर्ण्याम्भोजानामपगण[घन]वराणामुपगते-
र्न शेवालैर्व्रालैरलकविषयैर्वोद्गतमपि ॥१०९॥
न चित्रं लावण्यामृतसरसि हंसेन वदने
द्विजेशेनाप्याप्ता वसतिरलकावर्तरुचिरे ।
लसद्गण्डाब्जे यच्छ्रुतिवरनिपाने भ्रमगमः
सपक्षाभ्यां द्वाभ्यामपि यदपि नाप्तस्तदुत किम् ॥११०॥
मनोबालं दोलायितमलकजालेन चलता
महेशान्या आन्दोलयितुमुत बालातिरुचिना ।
प्रतीके प्रत्येकं स्वयमिह ममैकाङ्गविषयां
श्रियं दृष्ट्वा भूयः परविषययानानभिमुखम् ॥१११॥

---

१. संगत्यै अलक इति च्छेदः ।

अनङ्गस्यारोढुं किमु रुचिभृतां रश्मिवलिता
कृता निःश्रेणीयं सुसुखमलकावर्तविततिः ।
अमूभ्यां शङ्खाभ्यां घनकचयुतौ नीलमणिजाः
शलाका निर्याताः किमु न कुटिलाः शुक्तिमणिवत् ॥११२॥
अमूभ्यां कर्णाभ्यां रुचिपतिरुची वीक्ष्य नयने
तदाकारं दध्रे किमु मणिरुचा कुण्डलयुगम् ।
त्रितां भातां मैत्रीमतिशयितुमाहोस्विदयुजं
समं चातुर्यं स्वं प्रकटितमिदं कुण्डलितया ॥११३॥
कचानां मालत्या विदलमणिपुष्पैर्घटयुगं
लसद्वल्गाभूषागुणपरिचितं कुण्डलवपुः ।
न शेके प्रोद्धर्तुं पररसभरं हेमरचितं
ग्रहिभ्यां श्रोत्राभ्यां रुचिपतिकराक्रान्तमिह किम् ॥११४॥
स्थितौ वल्गाभूषागुणमुत तमोदुर्घनकचः
करैः संरुद्धयैतं सुमणिविशदैः कुण्डलवपुः ।
द्वितीयं कृत्वैतौ सुखमुपरि यातुं कचतते-
रसंतुष्टौ स्थित्या नयनविषये सूर्यशशिनौ ॥११५॥
इयं नासा रन्ध्रद्वयविलसितोच्चैः सुषमया
रतेः कामस्यान्तःपुरमभिनवं किंनु विचितम् ।
स्फुरच्चन्द्राभोगां बहिरुपनिवेष्टुं तत इमौ
कपोलौ माणिक्यस्थलकविषयां वा श्रियमितः ॥११६॥
तमीं छायां वीक्ष्याप्यलकरुचिरे पार्श्वे उदिते
प्रभाज्योत्स्ने भूते किमिह न पृथग्गण्डविषये ।

अतो मध्यं रिक्तं पुनरपि च संपूरणधिया
कृतं तारास्थानं नयनरुचिपत्योर्गिरिजया ॥११७
इयं नासा तूणी रतिरतिपयोर्युग्मविवरा
स्वसंकेतायालंकृतिरुचिमतीवैकत इह ।
फरे द्वे माणिक्याम्बुजदलमये पत्ररचना-
हिरण्याङ्कौ गण्डावलकवरसंग्राहगुणिनौ ॥११८।
इयं नासा हंसद्विजपतिसमीपे विलसिता
कपोलाम्भोजान्तः सृजति किमु मुक्ताण्डनिकरम् ।
स्वभूषास्थं हंसी यदिह सततं बाल्यललितौ
प्रजातौ हंसौ द्वौ द्विजमणियुतौ कुण्डलमयौ ॥११९॥
गरुन्मन्तौ कौचित् कनकमयसत्पक्षरुचिरा-
विदं वीक्ष्याप्येतावलकभुजगस्वामियुगलम् ।
विरोधं नो यातः कथमपि लसत्कुण्डलरुची
यदस्माद् धामभ्यामपि स उपरुद्धो नच मिथः ॥१२०॥
विधुं विष्णुं दृष्ट्वा द्विविधवपुषातीव रुचिरं
गरुत्मान् द्वैरूप्यं किमु न विदधे कुण्डलमयम् ।
श्रियाप्याप्ता द्वैधं वसतिरिह तद्गण्डविषया
जयी मारोऽप्याप्त्वा मयि समुदितं स्वं कुलकुलम् ॥१२१॥
शरान् पद्मव्रातं युगपदभिसन्धानकलितान्
धनुष्पाल्योर्दृष्ट्वा निजवधसशङ्केव लभते ।
इयं नासाभूषा विमलमणियुक् कम्पमिह यत्
प्रवेष्टुं तद्रन्ध्रद्वयमिव चलन्ती वलयिता ॥१२२॥

---

१. ख. 'विधये' पाठः ।

इयं नासाभूषा परिचलति किंस्विद् गमयितुं
चला नैवाहं स्यां वपुष इत ईशानदयितात् ।
यतो जात्वप्यस्मात् प्रथित इह मृत्युञ्जयवरः
शिवाप्तोऽन्यैरीशैरभिलषितखेलोऽमित इति ॥१२३॥
इमावोष्ठौ बिम्बे खलु यदत एवार्कशशिनौ
सबिम्बौ किं वैतौ प्रतिफलितबिम्बौ रुचिपयोः ।
ह्रदे सूक्ष्मे वक्त्रे सरसरुचिरे दन्तकिरणा
यतो निर्यान्त्यावर्तक इह कपोलौ श्रयति च ॥१२४॥
इमावोष्ठौ रक्तौ बहिरुपगतौ विद्रुमवरौ
रदा मुक्ता अन्तर्मुहुरभिकिरन्तः सितकरान् ।
हसन्ति द्वौ पूर्णाः करि[त्रि]गुणितया [1]वातिगतया
स्वचातुर्यं तत्तावुदरगतविच्छेदविशदौ ॥१२५॥
प्रवालोऽस्या बालो द्रुमसमुदितो यत् तुलयितुं
क्षमो नोष्ठौ [2]तद्विद्रुम उत कथं स्याच्छकलभाः ।
अतो ह्येतौ केनाप्यधृतसदृशत्वावधरतां
प्रयातो मे धत्तो रसमिह कथं वोत्तरतरम् ॥१२६॥
त्रयं कान्ता दन्ताः सकलमुचिता वर्णमपरं
समादातुं मुक्ताविशदकिरणाः केवलमपि ।
युवां रागासक्तावपरगुणिनावित्यनुमुहु-
र्हसन्त्योष्ठौ सङ्क्रामयितुमिव पूर्णं निजगुणम् ॥१२७॥

---

१. ख. 'गुणतया' क. 'वाधिगतया' पाठः। २. क. 'तद्वद्रुम उत कथं स्याच्च सुलभः' पाठान्तरम् ।

स्वतन्त्रेयं स्वेन द्विगुणपरतन्त्राङ्ककलिते
रदैर्द्वात्रिंशद्भिर्विधिभिरनुपस्पृश्यविभवा ।
प्रसिद्धैः सिद्धीनामहह परतन्त्रत्वकलया
न वाणी वाण्यापि प्रथयितुमलक्ष्म्या समुचिता[1] ॥१२८॥
श्रियं वीक्ष्य व्याप्तां विविधवपुषाङ्गेषु सकलां
रसामूले स्थित्वा स्वयमुत पराङ्गेषु लसति ।
निजाङ्गैर्वाणीयं कथमपरथाङ्गाङ्गविपयां
निजं भारत्याख्यां जनमुपनयेद् दर्शनभवाम् ॥१२९॥
परा फुल्ला दृष्टिस्त्रिविधवपुषा दत्तविषये
यदेषा पश्यन्ती परसितपदे मध्यसुरुचिः ।
किरन्ती व्याप्याग्रेर्विततविखरांशूनकलुषा-
नहन्तां सेदन्तां प्रथयति चमत्ताभिललिता ॥१३०॥
श्रुतिस्थानं स्थाने प्रकटनिजभूपाङ्गरुचिरात्
स्वचातुर्यादेषा श्रुतिशिरसि चैक्यं गमयति ।
ततिर्मुक्तानां यच्छ्रुतिनयननासं ह्युभयतो
गता स्वङ्गत्वं वा त्र्यवयवमयी धामविभुता ॥१३१॥
अयं सन्धिः किं तद्धितपर उपाख्यातकृदलं
न लिङ्गाढ्यः सूत्रप्रकटगतिनासः स्वपदगः ।
गुणी शब्दैः श्रुत्याः श्रित इह ततां व्याकरणतां
प्रयोग्योऽन्तर्मूर्च्छद्ध्वनिरपि गिरो धामजनितः ॥१३२॥
विधेस्तेजोराशेर्मिथ इह निषेधादपि हतेः
प्रयोग्या मीमांसा स्तुतिपदविशिष्टा किमु न वा ।

१. ख. 'समुदिता' पाठः ।

सुभोगे कामारेरतनुसुखकर्मोदयकरी
स्थितिः प्रायश्चित्तप्रकटनयुता यत्पद इह ॥१३३॥
रदास्तर्क्या द्वैधं कृतवसतयः षोडशपदै-
र्न निर्मुक्तौ भोगेऽप्युचितविधिभिर्वाक्यकरणैः ।
रदाली ओष्ठौ वागुभयविषया नो दधति वा
श्रियं पड्भावाप्तामिह किमु विशेषार्थवदने ॥१३४॥
श्रुती नेत्रे नासे वदनकमलं नेत्रमपरं
प्रयातानि स्वेन प्रकृतिपदवीं यत्सुषमया ।
दलाभ्यां द्वाभ्यां यद् विकृतिमपि वैशिष्ट्यकृतिजां
समीच्यात्मा संख्या तदिह नहि पर्याप्तिमगमत् ॥१३५॥
रदैर्द्वात्रिंशद्भिः परिकलिततत्त्वकलनैः
स्मृतिर्वैष्णव्यत्र स्फुरति किल यद्दृक्नयने ।
स्मरो जातो विष्णोरसुबलयतो मामभिगतोऽ-
निरुद्धाहङ्कारः कलयति मनः पूर्णकलया ॥१३६॥
अयं सप्तद्वारैर्[1]मुकुटविधुनेत्राग्निसहितैः
प्रयातो नार्हत्त्वं विषय इह किं वाप्यभिनवः ।
कलाभिः सद्धाम्नां द्विपुटसुषमाभिर्विधुकला-
युतैस्तैर्मिश्राभिः श्रितमपि न ताथागतगतम्[2] ॥१३७॥
स्वतां पूर्णे प्राणो वहति च परे शून्यपदवी-
मयं नासाभागे खविषय[3] इतोऽपि प्रकटते ।
तदर्थस्वात्मापि स्फुरति सुषमापि प्रथयति
शरीरं स्वं सर्वा गतिरिह तता दर्शनकृता ॥१३८॥

---

१ सप्तद्वारैः । २ 'बौद्धदर्शनम्' । ३ इन्द्रियवर्गः ।

अमुष्यां पुत्रत्वं स्फुरति मम वा दारकलना
तथेयं सर्वस्वं भवति ननु मे पूर्णललिता।
गिरीशाद्[1] यन्मृत्युञ्जयविभवदा स्वोपधिलता
प्रजातेयं तद्वाऽप्रथयदगदङ्कारसरणिम् ॥१३९॥
स्फुटास्त्राणामस्यां सरणिरतनोरङ्गविषया
बलात् तस्याप्यस्यां विलसति न पौराणिकतनुः।
मुनीनामार्याणां स्मृतिरिह लसन्त्यस्ति वितता
न को वा वेदैर्नां यदत इतिहासोक्तिरचला ॥१४०॥
प्रतीकैरातोद्याकृतिमुपदिशन्ती गुणिजनैः
सुसंवेद्यां तत्तद्ध्वनिमभिजयन्ती ध्वनिपदैः।
सदा नृत्यन्ती यद्धृदयकमले मे स्फुटगति-
स्तदेषा गान्धर्वी स्फुरति मम सीमा परमयैः ॥१४१॥
मदर्थोऽस्या यस्मात् परम उदितो वार्थरचना
स्फुटा नास्यां तत्किं रदनसुरुचा वा द्विगुणया।
चतुष्षष्टिः स्पष्टा तदुत न सदा ता अपि कलाः
कलाकौशल्यं यत् प्रथितमिह सर्वात्मकलया ॥१४२॥
इयं साहित्याब्धेर्नवरससुधाघूर्णितगतेः
परा मूर्तिस्फूर्तिर्जयति जगतीशानदयिता।
यतः साहित्यांशं मदन उचितं प्राप्य मुदितः
सराख्यां मय्येव प्रथयति सदान्वर्थललिताम् ॥१४३॥
इमां वाणीं वीणा तुलयितुमशक्ता गुणगणैः
प्रबुद्धा निर्मुक्तां स्वत इह विपञ्चीति गदिता।

---

१. हिमालयात्।

तथैवाधूम्राभा सुचपलगतिः कोकिलवधू-
भृतां स्वेन त्यक्ता निजजनतयैषा परभृता ॥१४४॥
स्थितं पादे हंसस्तुलयितुमिमं हंसकमपि
क्षमो ध्वानैर्मन्द्रैर्न हि कथमिव स्याद् गिरमिमाम् ।
विलापादन्विष्यन् प्रियमतिमुहुः सामयपदः
प्रियस्पृह्यां भूयः कथमभिगतः स्यात् स च शिखी ॥१४५॥
शुको धात्वर्थं[1] स्वं व्रजति नितरां रागविकल-
स्तुलामप्राप्यास्या न खलु विलपन् क्रेंकृतिपदैः ।
तथा शारी शारीभवति ननु वर्णेन न गिरा
यदृच्छामात्रेण प्रथिते[2] इह वायं कलरवः ॥१४६॥
निजे दृष्ट्वा त्र्यश्रं[3] त्रिनयनकृतं शैवमलिके
स्वमप्यन्तर्बिन्दु प्रकटितवती किं नु चिबुकम् ।
सुपश्चत्वं द्वारो नयनमुखमुख्या यदलकै-
र्दलाष्टत्वं याता द्विगुणदलवत्यो वलयितैः ॥१४७॥
स्थले गण्डौ धाम्नोर्नयनकृतधाम्नोर्निजरुचेः
प्रसाराय व्यक्ते यदत इदमस्तीह चिबुकम् ।
रदानां कौमुद्या अपि किमधरत्वं गमितयो-
स्तयाख्यातं नामाप्यधरवरयोर्बिम्बजयिनोः ॥१४८॥
इयं ज्योत्स्ना कृत्स्ना प्रसरति यदस्माद् रदनजाः
कला द्वैगुण्येनौषधिपतिकलाभ्यः समुदिताः ।
इमे यत् खेलन्तो मुखमिह करैर्व्याप्य तदिदं
रदानां कुन्दत्वं छदयुगपरं तत्[4] सुमनसाम् ॥१४९॥

---

१. शुच शोके । २. नाममात्रेण । ३. ऊर्ध्वत्रिकोणम् । ४. कुन्दत्वम् ।

सुवृत्तौ द्वौ गण्डौ वदनमतिवृत्तं विमलभा
दृशो नासा ऋज्वी सततमवदाताश्च दशनाः ।
सुरक्तावोष्ठौ वा चिबुकमतिपश्चात्त्वमबहि-
र्गतान्यन्तर्वक्रं श्रवणयुगलं चार्ध्यमुचितम् ॥१५०॥
दृगादेरङ्गस्य श्रियमपि न यात्यंशविषयां
विधुर्वा पद्माद्यं यदत उपमातुं मुखमिदम् ।
न योग्यं केनापि प्रथितमिह सर्वातिसुषमं
मुखत्वेनैवास्याः सुखयति मुखं कस्य न गिराम् ॥१५१॥
विधोरन्ते शोभामदधदपि वा कण्टकहत-
मधः पद्मं काले विकसितमजाड्येन विकलम् ।
उत स श्रीर्भीता भजति नु कुलस्नेहविवशा
मुखांशेनैकेनाप्युचिततुलनं स्यादिति किमु ॥१५२॥
असत्पक्षं नित्यं सकलमतिवर्णं ससुषमं
निजाङ्कैः कौमुद्या द्विजविभवया तामपि कलाम् ।
दधद् व्यञ्जत्तारारुचि वदनमेवाङ्ककमल-
श्रियो मित्रं चन्द्रो भवति न परश्चन्द्र उचितः ॥१५३॥
कलामेनां संत्याजित उत विधुः प्रेमविवशः
क्षयं यात्यन्विष्यन् पुनरुदयमेतीह सकलः ।
स्वयं संसक्तां तां समधिगतवानाननविधुः
सदा पूर्णस्तिष्ठत्यपि हतकलङ्कः पररुचिः ॥१५४॥
समं मासे मासे मुखसितरुचा कर्तुमलसो
विधिर्घाटं घाटं हिमकरमिमं लोपयति किम् ।

---

१. पार्श्वतः ।

तथाप्येनं हीनं स्थगयति रुषा कुण्डलनया
कदाचिद् दुर्घस्त्रैस्तपनतमग्ना वापि तमसा[1] ॥१५५॥
गृहीतो हान्यापि प्रकृतिमधुरैर्वाग्मिभिरयं
तुलायै वक्त्रेन्दोरशितकर आरोहति दिवम् ।
विनिष्क्रान्तं पङ्काज्जलजमपि मां वा स्मृतिहताः
कदाचिद् गृह्णीयुः कवय इति किं नृत्यति चलम् ॥१५६॥
स्वसाम्राज्यं चन्द्रं मुखमिव समालोक्य कुरुते
परो भ्रान्त्या नीराजनमशितधामा स्वकलया ।
गुणज्ञेनानेनाप्यबलबलदात्रा करुणया
स्थितिर्दत्ता वामे नयन उत किं शीतलरुचे[2] ॥१५७॥
विकीर्णाः सद्वक्त्रादमृतकरवर्याद् द्विजगणैः
स्मितव्याजाज्ज्योत्स्नाः कति न यदतः ख्यातमिह तम् ।
अत्राप्यैका ज्योत्स्ना कथमपि सहायं हतरुचीन्
विधत्ते ताञ्ज्योत्स्नापतिमपि विदन्ती न्वपकृतिम् ॥१५८॥
मुखं सम्राट् सत्यं त्रिभुवनवरस्त्रीमुखनृपान्
श्रिया जित्वा राज्या विलसति कचन्मण्डलपतिः ।
श्रवःपूराभ्यां तद्दलघटितरत्नच्छुरणया
चलद्भ्यां छत्राणां त्रयमिव युतो भाति तिलकः ॥१५९॥
अनेकैरेकं स्वावयवकिरणैर्व्याप्य लसितं
श्रवःस्थानं नानाविधरुचि महादृष्टिविषयम् ।
विशुद्धं केनाप्यप्रतिमितमिदं वाग्रसमयं
परब्रह्मप्रख्यं परमभिनमामो मुखमुखम् ॥१६०॥

---

१. राहुणा । २. ख. 'शीतरुचये' पाठः ।

इयं ग्रीवा स्पष्टं स्फटिकघटिता यष्टिरवटु-
प्रकृष्टाङ्का मारप्रहरणनिधानाय रचिता ।
श्रवोभ्र्यन्ता[1] रेखा चिपिटसमवंशत्वच इयं
गतांशेन ज्यावद्यदिह परिलम्बा विलसति ॥१६१॥
सहस्रांशं ग्रैवं यदि परिलभेतापि वरला
भवेत् स्वग्रीवायां सततमनुरक्ता न हि कथम् ।
न वा वृत्तिं जह्यात् सततलषितां मानसभवां
भवेत् खिन्ना खिन्ना कमलधर[2]योगेन च न वा ॥१६२॥
स सोत्कण्ठः कण्ठोत्थमपि कलकण्ठः स्वरगणं
वहत्यस्याः श्रोतुं तनयमिव संखण्डितपदः[3]।
च्युतो वेणुर्वंशाद् विलपति निजाद् वंशममलं
नयन्त्याः पार्वत्याः प्रथनमुत कण्ठस्वरजितः ॥१६३॥
गले रेखा एता गमयितुमिव त्रिर्गतियुतं
परं गीतं मूर्च्छत्स्वरगणमिह ग्रामकलया ।
स्वराणां षण्णां वा युगयुगपदं सप्तमपदे
लसन्निम्ना मध्ये तदिह परिनृत्यन्त्यवयवाः ॥१६४॥
इदं बाह्वोर्युक्तं युगमपि परं यद् भुजयुगं
समादत्ते युक्तं युगयुगपरित्राणमिह च ।
धुरा युक्तं वोढुं रथमपि युगं तन्मम मनो-
रथं धर्त्राऽऽश्लेषैर्वरमुत न कामां भुजधुराम् ॥१६५॥
भुजानां चातुर्यादधिगतकरालम्ब उदितः
शिरस्याप्तस्थानः स्मर इह वसन्तोऽप्यवयवैः ।

---

१. क. ख. 'भ्यान्ता' । २. जलधरः । ३. ख 'कण्ठ्याः' पाठः ।

सदा सूनैर्वक्त्रे मम विरहवह्निर्धृततनु-
बहिर्निष्क्रान्तोऽयं तदलिककृतस्थान उत किम् ॥१६६॥
भुजाभ्यामाश्लेषात् परभुजयुगं स्वं प्रकटितं
श्रिताभ्यां कौटिल्याभ्यवहृतिकलां पालयति माम् ।
न चेदेतैद्व्यर्थो मम परपरार्थः कथमिव
प्रकाशः स्यादाशाभृशकृशतया वैकैकगतेः ॥१६७॥
भुजेभ्यो वैतस्याः कृतवसतिराप्तुं भुजगतिं
भुजङ्गानां व्रातोऽवहदुरगतां मय्यपि पराम् ।
भुजङ्गेशं चण्ड्याः सततमिह तद् भूषयति मां
लभेतास्मात् कस्मान्न हि मणिमयं मौलिमुचितम् ॥१६८॥
मृणाल्यन्तश्छिद्रानधिगतवतीमां भुजकलां
स्थिता हित्वोष्माणं जलजपदलीना बहिरिव ।
सदा पङ्काच्छङ्काकुलितहृदयोद्गन्तुमसहा
भुजाश्लेषाकाङ्क्षैर्विरहिभिरपीतो विरहिता ॥१६९॥
विजेतुं प्रत्येकं त्रिभुवनमिमं मां च करगाः
प्रजाताः किं शाखा अतनुबलदा विंशविशिखाः ।
भुजेभ्यो वेदेभ्यो बहुगुणयुता वा यदुदिता-
स्ततः पर्वस्थानं प्रकटमिह विच्छित्तिविशदम् ॥१७०॥
कथं छाया नैतानुदितकरजालेन विधुना
विलोक्याप्या भूयः करजसितरश्मीनविकलान् ।
इमे शाखाभ्यो यद् विधव उदिता न्याय्य इह तत्
सशाखाचन्द्राख्यः कथमिव न वा न्याय उदितः ॥१७१॥

१. वा अप्यर्थे ।

करानेतानाप्त्वा चतुर उदितः षोडशकलः
कथं न स्यात् सम्यक् करजवपुषा विंशतिकलः ।
चतुर्भिः प्रत्येकं कथमिव चतस्रो न च कला-
श्चतस्रोऽयं लब्ध्वा सकल इह नित्यं करवरैः ॥१७२॥
प्रवालो बालोऽस्यास्तुलयितुमिमान् हस्तनृपती-
नशक्तस्तर्जन्यां पतति सभयो मर्मर इव ।
पिधायास्यं धूल्या तुलनजनितागो जलगते
प्रमार्ष्टुं संशुष्यन्नयनपरिपाकेऽपि कमलम् ॥१७३॥
क्षणं फुल्लं स्वेन क्षणमुकुलितं वा दलसमा-
कृतेरुद्यच्छाखाजनितकरजाब्जं व्यतिजलम् ।
मृणालीबाहुस्थं निचिडमृदुभिः कण्टकगणैः
सदा लक्ष्मीस्थानं किमपि शवलं हस्तकमलम् ॥१७४॥
भुजानां रक्षासु प्रथितविभवानां त्रिजगतो
विभूषायै युक्तः सुकटकततेः साङ्गद इह ।
प्रहस्तस्मान्मुद्रा अपि समुचिता मर्मविषये
करैः स्फार्तिं यायात् कथमपरथा शासनकला ॥१७५॥
क्वचिद् द्वौ षड् वाष्टौ दश च चतुरो द्वादश चतु-
र्दशाप्यष्टौर्वाष्टादशवपुष एतान् भुजवरान् ।
क्वचिच्चापं बाणं वरमभयमब्जं दरगुणौ
सृणिं खड्गं कांद्याद्यमपि दधतः कानपि नुमः ॥१७६॥
भुजानामाश्लेषं कुचयुगमिदं पश्यदुत किं
मिथः श्लिष्टं सूर्यं नयनविषयं वोर्ध्ववदनम् ।

---

१. आयुधविशेषम् ।

न यच्चन्द्रोपान्ते त्यजति सुषमां पद्ममुकुलं
ततश्चन्द्रोऽप्येतद् भजति नु किमालेपनधिया ॥१७७॥
वलीसिन्धूस्तीर्त्वोदरखनिलसन्नाभिकुहरा
महालावण्यार्थव्रजसहजसीमान्तमतुलम् ।
सरो दुर्गादुर्गं स्ववशमिव नीत्वा निहितवान्
स्थले संस्वां[त्वा]द्याधोमुखमुरसि सद्रोमुखकुचौ ॥१७८॥
अयं सत्यं कश्चित् कुचकमलराजो मुकुलितो
दधन्मौलिं युक्तो दशशतदलैश्चूचुकमणिम् ।
लसच्चक्राभोगः श्रितपरमलक्ष्मीः समुदितो
यदन्तस्तस्यापि प्रपतति न सूत्रं तदुत किम् ॥१७९॥
प्रसिद्धं वाक्सिद्धिप्रभवतरुजं श्रीफलमिह
यथा तद्वद् देव्या अपि कुचफलं किं न सफलम् ।
यदेतन्निर्गच्छत्पररससमास्वादकतया
परा वाणीसिद्धिः कचितकचिता भाति कृतिनाम् ॥१८०॥
श्रवोऽधस्ताद् दृष्ट्वा चलितललितं तालदलजं
स्फुरत्ताराकारप्रसवमपि तारं विकसितम् ।
फलाभ्यां तालाभ्यां कुचयुगतया ताल उरस-
स्तलेऽवाप्तो नाभीसरस उपकण्ठेऽपि सफलः ॥१८१॥
समुद्रौ सौवर्णावुपरिविलसच्चूचुकमणी
कृतौ केनाप्येतौ सपरिचयनाडिन्धमभुवा ।
विशेषं निःशेषं लवणिममहार्थं स्मरविभो-
र्विलासोत्साहस्यादृतसुरभिमन्त्रस्य दयितुम् ॥१८२॥

---

१. 'संसाद्य' ख. पाठान्तरम् । २. ख. 'चन्द्राभोगः' पाठः ।

किमप्येतौ शोभावहमभिनवं कोकयुगलं
विलोक्येमं मित्रं दृढमुदितमुत्क्षिप्तवदनम् ।
शशाङ्कं वा शङ्कामुकुलितमपि प्राप्य सुरसं
ततोऽभ्यन्तर्नाड्या स्रुतमभिमुखं नैति विरहम् ॥१८३॥
तरीतुं लावण्याम्बुधिमतुलसौन्दर्यसुरसं
स्मरो लीलाखेलः कुचकलशयुग्मं नु धृतवान् ।
प्रभाचक्रावर्तादुरस उत मुक्तागुणमपि
दधौ निर्याणाय प्रसृतमुपकण्ठं करगतम् ॥१८४॥
बुधैः पार्वत्येषा वरमभिहिता तद्यत उरः-
स्थले नानाधातूद्भवरसविलिप्तं कुचतया ।
इदं जातं शृङ्गद्वयमत इहैषा सुरसरि-
च्छलन्ती कण्ठाधो लसति सितमुक्तोत्थलहरी ॥१८५॥
स्वकुम्भाभ्यामेतौ तुलयितुमशक्ता इव गजा
गजास्येनैवास्यास्तनयमभिसन्धाय चतुराः ।
करेणासेवन्ते स्तनजरसलोभस्य मिषतः
स्वकीयेन द्योतत्सितमणियुतौ गुप्तमणयः ॥१८६॥
स्वकुम्भौ हेरम्बः स्पृशति निजहस्तेन च कुचौ
समत्वं किं द्रष्टुं पुनरिह समास्फालयति तौ ।
स्वकुम्भौ धूल्या वा मलिनयति तस्मात् स्तनरसं
पिबत्येतौ भूयः सुरसरुचिरौ कर्तुमिव किम् ॥१८७॥
हितं मित्रेणास्मै यदमृतरुचे दक्षिणतया
कृतं वामेनानेन च तदिह किं प्रत्युपकृतम् ।

---

१. ख. 'शक्या' पाठः । २. मुक्ताः । ३. मौक्तिकानि । ४. विधुना ।

कुचौ चन्द्रस्यान्ते सवितुरिव यत् कोकसुहृदौ
न विश्लेषं यातः किमपि विधुरागातिविमलौ ॥१८८॥
यथा नाभेर्विष्णोः कमलमुदभूद् बाह्यविषये
तथोरस्तो जातं कुचकमलयुग्मं न किमिदम् ।
इमावेवान्तःस्थौ सततमनयोरेव सुमुखौ
हिरण्याङ्कौ स्वायम्भुवशिवकलां यत् कलयतः ॥१८९॥
इदं पुण्यं स्तन्यं परममृतरूपं ननु रसा-
यनं सिद्धं स्वेन प्रथितविभवं किञ्चिदमलम् ।
यदास्वाद्य स्कन्दः सुकृतसुकृतं निर्जरचमूं
कुमारः सोऽद्यापि प्रभवति विनेतुं धृतनयः ॥१९०॥
इदं स्तन्यं धन्यः समधिगतवान् विघ्ननृपतिः
सुपुण्यानां पाकादहह मृतसञ्जीवनरसम् ।
कथं दन्तीन्द्रास्यव्यतिकृततनुः स्यादपरथा
वहन् धारां मूर्तामिव विगतमृत्यू रदमिषात् ॥१९१॥
इदं पुण्यैः स्तन्यं यदि परिलभेतेह विरलो
बुधः कश्चिन्मातुः स्तनरसमपीहापरिचितः ।
भवे भूयो नैव स्वरसरुचिरास्वाद्य तदिदं
शिवत्वस्याभिज्ञो भवति शिशुरस्या अपि कविः ॥१९२॥
सुनाभ्यम्भोराशिस्त्रिवलिसरिदासङ्गरुचिरो
विरिञ्च्यात्मस्थानं भृशकृशतरं मध्यतटवान् ।
किमायातः कृत्वाद्भुतकुचसुरूपं विधुरमा-
पदं पूर्णं द्रष्टुं प्रकटितपरचीरसुरसः ॥१९३॥

१. कर्पूरश्च ।

कुचावेतावन्तःपुरमभिनवं मे ननु मुदे
स्फुटं कञ्चुक्यन्ते प्रतिगतिनिबन्धाय यदसौ।
सुवर्णश्रीराप्ताः समतिशयितुं हंसनिनदं
कुचाभ्यां कोकाभ्यां कनकमयकिङ्किण्य उत किम् ॥१९४॥
इमं देवच्छन्दं कुचकलशयोः प्राप्य मदनः
सुदुश्चेष्टो यातोऽप्यमरवरतां विश्वविजयी।
तथैवैकावल्या करकलितया कालवशगोऽ-
प्यनङ्गोऽप्युत्तस्थौ सपदि मधुमित्रोऽद्भुतरतिः ॥१९५॥
विधायान्तर्द्वीपांश्चतुर उदधीनामपि चतु-
ष्टयं किंस्विन्नाभीवलिपरिमितं भाति यदिह।
इदंपृष्ठे रोम्णां ततिरियमनन्तो मुररिपुः
सुखं शेते दृष्ट्वा स्वतनयबलं श्यामसुतनुः ॥१९६॥
सुधाकुण्डं नाभीं कुचशिखरतो रोमवितति-
र्भुजङ्गी किं शीताधिगतिकलया सद्रसचिता।
अवारूढा तस्या भ्रमगमनरेखाङ्कितभुवः
किमेताः संवृत्ता अध उपगता भान्ति वलयः ॥१९७॥
इदंनाभीकूपे त्रिवलय इमा रोमसगुणे
प्रणाल्यः किं सज्जस्तनकलशयुग्मे रसितया।
स्वमारामं सेक्तुं कथमपरथा राजति सदा
वसन्तोऽङ्गैः पुष्पैर्विकसिततनुः कामरतये ॥१९८॥
त्रिवेणीमालोक्याम्बुनिधिरपि नाभिर्वलिमयीं
समुद्यातुं वेलां न सहत इमामन्तर्विषयाम्।

१. सौविदल्लश्च। २. हारविशेषम्।

परिष्वङ्गायोत्कोऽपि च यदिह कौक्षेयदहनो
    यथौर्वो जागर्ति प्रबलगतिहन्तान्तरगतिः ॥१९९॥
चतुर्णामब्धीनां किमु समुदयो नाभिरुचित-
    श्चतस्रो यद् वेला युगपदिह नाभ्यन्तवलयः ।
अतोऽमीषां दग्धुं बहिरुदकमेकोऽन्तम इव
    ज्वलत्यन्तः कुक्षावहह वडवावक्त्रदहनः ॥२००॥
इदं पृष्ठं पृष्टं किमु तव न केनापि तुलना
    वदेत्येवं पृष्टे सपदि परिवृत्त्यात्मवदनम् ।
स्थितं किं वा स्पष्टस्फटिकघटिताद्रीन्द्रफलक-
    व्रजं भूयोभूयो हसति सुषमावीचिकाचितैः ॥२०१॥
इदं सौक्ष्म्यं वेदिर्न खलु लभते स्मोदरगतं
    रसाक्रान्ता भूता तत इव लसन्मत्सरतया ।
असम्बाधा गोधाभवदिह च मातुं यत इतो
    रसाक्रान्तं गोधावतरमभियाता समपदम् ॥२०२॥
चतुर्वक्त्रो धाताजनि किमुदरस्थं सुषमया
    सुसूक्ष्मत्वं सम्यक् किमपि परिचेतुं मतमतिः ।
सहस्राक्षः सोऽपि प्रसभमनिमेषोऽमरपति-
    स्त्रिनेत्रोऽहं भाग्यैरपि ललितपञ्चाननपदः ॥२०३॥
विचित्राभै रत्नैरुपकलितया किंनु पटहा-
    यितं काञ्च्या संदर्शयितुमुदरं स्पष्टमभितः ।
अनालोक्यं कोलाहलकलरवैः संकलितया
    किमेषा वा दोला मदननृपतेः खेलनमुदे ॥२०४॥

भ्रमन् बुद्ध्या सिंहोऽप्युदरमुपमातुं समुदितः
सकृद् हर्षेणान्तःस्वर उपरि लब्ध्वा कथमपि ।
अगच्छन्नाम्नोऽपि प्रतिविनिमयं तत् कविवरैः
समासेनैवायं खलु मृगपतित्वेऽप्यधिकृतः ॥२०५॥

इदं मध्यं दृश्यं कथमपि न यत् स्पष्टमभित-
स्ततो मध्याद्याख्याप्रथितमिह चान्यत्र कलया ।
निमग्नं मास्त्वेतत् परमबहिरित्येव रशना-
गुणैर्बद्ध्वा न्यस्तं त्रिवलिनिकटे वा सनिनदम् ॥२०६॥

सहस्रं किं नाम्नां स्मरसुरपतेर्भूरिरसना
पठत्येषाश्रान्तं मणिभिरुपबद्धेह[1] रशना ।
अधोवक्त्रा तस्माद् रह इव न रोमावलिरियं
जपत्येतन्मन्त्रं किमु सपदि मत्कार्मणकरम् ॥२०७॥

इदं रोम्णां राजिं कचतिमिरसभ्यां सदुदरे
परस्थानां दृष्ट्वा नयनरुचिपाभ्यामपि निजम् ।
नितम्बस्थं बिम्बद्वयमिह कृतं किं नु तदधो
यतो नेयं तत्र प्रकटयितुमीष्टे प्रसृतताम् ॥२०८॥

उभौ बिम्बस्थानौ नयनरुचिपौ वीक्ष्य परतः
श्रिया गण्डस्थानाजिररचितसद्विभ्रमततौ ।
शिरोबिम्बस्थं किं कचतम उतानुद्रुतमपि
नितम्बौ सद्बिम्बौ स्वयमुभयतो व्याप्य विलसत् ॥२०९॥

निरालम्बे मार्गेऽनिशमुपरि जाग्रद्व्रततया
नितम्बौ तावेतौ समधिगतवान् किं निजरथे ।

---

१. क. 'उपरुद्धेह' पाठः ।

रथाङ्गे तीक्ष्णांशुः कथमपरथा पर्वतभुवोऽ-
प्यतीताङ्गं दीर्घामलभत पदं दक्षिणदृशम् ॥२१०॥
नितम्बाभ्यामस्यां विततविितताभ्यां न कटका-
यितं मध्योद्गच्छद्वलिसरिति किं पर्वतभुवि ।
नरीनृत्यन्त्येते सममिह सदा यद्घनरुचः
शिरःशृङ्गोन्नद्धा ललितगतयो बालपतयः ॥२११॥
नितम्बौ तावेतौ मदनविजिगीषोर्न पटहौ
विधातुं स्वायत्तामभियत इमां पर्वतभुवम् ।
यदग्रे मीनाङ्कौ नयनयुगलं सिन्धुरकटौ
कुचौ सोरू जङ्घे यदनु च ततं गोमुखयुगम् ॥२१२॥
नितम्बौ किं नाभीसरसि वलिनाल्यन्तरगतौ
सरस्वत्याः कुण्डे इव नहि निपानेऽस्फुटरसम् ।
यतः पायं पायं सुतमभिमुखं पादपयुगं
पथिभ्यामूरुभ्यां नखकुसुमशाखाभिरुदितम् ॥२१३॥
त्रिचक्रात् कन्दर्पस्तदतुलनितम्बद्वयकृती
वितीर्यैकं पित्रे किमु न निदिदेशातलपदम् ।
स्वयं स्वर्भूस्थानं व्यधित खलु विष्णुः स्मर इह
स्मरो विष्णुस्तत्तच्छ्रुतिरपि सुतात्मैक्यकृतगीः ॥२१४॥
इमौ रम्भादर्पं परिहरत ऊरू स किमतो
नगत्वं सावाप्ता पदतलविमग्नातितुहिना ।

---

१. ख. 'धीः' पाठः । २. द्रुमत्वम् ।

निशम्यैतद् दूरादपि तुलिततन्नामकलया
सुरीणां सा त्वन्या ह्रिय इव सुयक्षाधिपतिता[1] ॥२१५॥
करं स्वं प्रोद्युक्तं तुलयितुमिमे वारणधिया
करीन्द्राणामूरू व्रज इह मुहुश्चालयति किम् ।
तदाद्येष ख्यातः समजनि सदा वारणतया[2]
तदागः संशुद्धं रचयति पुनः कुण्डलनया ॥२१६॥
तुलानाप्तेरूर्वोर्वरमजनि मोचा विनिमया-
कृतिर्मुञ्चत्येषाप्यहह दलयूथं नवपरम् ।
नितम्बौ जानुभ्यामपि सुकटकौ मण्डलितया
विलोक्याधार्यस्या न कटकयुगं रत्नखचितम् ॥२१७॥
इयं जङ्घानङ्गामरपरपदारोहणविधौ
स्थिता निःश्रेणी किं प्रथित इह जङ्घालकतया ।
ततः कन्दर्पोऽयं सततरतिराड् विश्वविजयी
न जङ्घे यष्टी वा रतिरतिपयोर्धारणविधौ ॥२१८॥
अयं चातुर्मुख्यं प्रकटयति गुल्फो न किमिदं
श्रुतिर्भावं सम्यग् वदति यदसत्त्वे सत इव ।
पदे किंचिद्वृत्ते कमलमपि यद् विष्टरकलां
तदस्मिन् भारत्युद्गम उपरि हंसीगतिरधः ॥२१९॥
स्थितान् गुल्फानेतान् निभृतनिभृतं नूपुरभवो
ध्वनिर्मन्द्रो मन्द्रः प्रकटयितुमाटोपविकटः ।

---

१ सुष्ठु यक्षेषु अधिपतिता निपतिता, कुतः शोभनयक्षाधिपतित्वं यस्याः सा,–इति च । २ ख. 'धिया' पाठः ।

ततोऽप्येते लक्ष्याः कथमपि न यत् सङ्करकला
न चातुर्यं तेषां प्रथितमिह जङ्घालकमतः ॥२२०॥
इमौ पादावादावधृत निजमूर्ध्ना शतधृतिः
स गोविन्दः संवाहयति करमर्देन गिरिशः ।
सदा पश्यन् मृत्युं जयति च महेशः स भजते
सदाशम्भुर्भूयो नियतनिजशक्त्येकरसिकः ॥२२१॥
इमौ पादौ पद्मं कथमुपमिमीते समगती
निखातान्तःशल्यं विषमपदगं रागि रजसा ।
सपत्राणां युक्तं भ्रमरपततां विभ्रमहतं
गुणाक्रान्तं भक्तिं भजति तदिदं मैत्र्यकलया ॥२२२॥
इदं यानं हंसः स न यदनुयातुं क्षम इमा-
वतस्तावेवायं भजति सततं हंसकतया ।
सुखी लब्ध्वा सम्यग् विनयमिह तन्मानसिकतां
गतः ख्यातं पद्मप्रभवविमलत्वं श्रयति च ॥२२३॥
दिनस्थाप्यारक्तस्य तदपि मृदुतादूररहितं
न जाग्रत् स्निग्धत्वं तदपि नगरुद्धं न करणम् ।
स्वशाखानां चैतद्यदि भवति सर्वस्वमिह तत्
प्रवाले प्रावाल्यं पदनुगतये नाधिकलितम् ॥२२४॥
सुवर्णाढ्यं पद्मं किमु तदुदितं मानसरसा-
दनुप्राप्तुं पत्रैरपि गतमिमौ मन्नचरणम् ।
अतीतौ सौवर्ण्यादपि जनितमन्मानसरसौ
चलत्पत्राकारौ धृतजलकलत्वं न चरणौ ॥२२५॥

न पादेशावेतौ नयनकर[1]पस्पर्धनविधा-
विधेयावादत्तो नखरदशराजीमनुकृतौ ।
गतां पार्ष्णी तद्द्वादशविधकलां तन्नयनगा-
वुभौ तौ पश्यन्तावध उपरि लुप्ताभिगमनौ ॥२२६॥
दिशां पङ्क्तावङ्घ्री सकलमभिनीराजनधिया
स्वयं राज्यं धत्तो नखरसुदशत्वं न किमिमौ ।
अतो दिङ्नाथास्ते हतनृपतिताः संयतकराः
स्वसाम्राज्यावेताविह न न नमन्ति प्रतिपदम् ॥२२७॥
पदाधीशावेतौ यदत इह पार्ष्णी अनुगतौ
नखैः शाखाग्रेषु स्थितिरुपनिबद्धापि दशभिः ।
महाराजैः स्वेनाक्रममपि दलानां वितनुतो
न वा प्रत्यग्राणामरुणतरुणौ निर्भरमिमौ ॥२२८॥
नखाग्रैरादेशं दशदिगधिपानां वितनुतः
प्रतिस्वं सन्मुद्रावधिकृतिषु भूयः स्मृतिषु च ।
सुपर्वाभिप्रख्यौ विजितकमलेशौ न चरणा-
वनुप्राप्ता बालास्तदपि सुमनस्त्वाधिकलिताः ॥२२९॥
भजन् पाद्यैः पादौ भजति परमं तन्निजपदं
पुनर्गन्धैर्गन्धं भवजनितमन्तं नयति च ।
अनर्घः स्यादर्घ्यैर्जगति सुमनोभिः सुमनसां
मनांस्यावर्जेत प्रकृतिसुमनस्त्वेन महितः ॥२३०॥
स्मारं स्मारं नान्यचेता उपासे कारं कारं पूजयाम्येष साक्षात् ।
सारं सारं वाहयामि प्रभुः सन् वारं वारं पादनाथौ नमामि ॥२३१॥

---

१. ख. 'किरण' पाठः ।

या भव्यवर्गस्य मया गृहीता तुला प्रतीकैरतुलैकलेशैः ।
ख्यातस्य कैश्चित्किल हानयेऽपि तत्प्रार्थितेनात्र न सा दयैव ॥२३२॥

आविष्टभ्यावयवकलनामेकतः स्वां कथञ्चित्
निःसंभाव्यां परत उचितां कर्तुमेषा विभाव्य ।
सन्धायैनामपि परनिजैर्मामकैः सत्प्रतीकै-
रेकैः सर्गं मुदमुपगता स्वं कृतार्थं चकार ॥२३३॥

क्वचिच्छ्यामां श्वेतां क्वचिदरुणभां क्वापि हरितं
क्वचित्पीतां क्वापि प्रकृतबहुवर्णां क्वचन ताम्
क्वचित्सौम्याकारां क्वचिदपि सुघोरां रुचिरुचिं
महाशक्तिं काञ्चित् सततमनुरक्ता अभिनुमः ॥२३४॥

स्वस्वातन्त्र्यपरानुभूतिकलयावश्यंभवित्र्योद्धते
साहिब्कौल इति प्रथावति पदे निर्माति यः सासनम् ।
सच्चित्पूर्वपदप्रकृष्टगतिभागानन्दकन्दल्यनू-
द्वारे तस्य कृतौ विलास उदिते भक्तिस्तुरीयागमत् ॥२३५॥

इति श्रीमहामाहेश्वराचार्यवर्यश्रीसाहिबकौलविरचिते
नामविलासे चतुर्थी भक्तिः ॥४॥

---

## पञ्चमी भक्तिः ।

तत्प्रसादमधिगत्य भक्तितः स्तौमि तामनुमुहुर्महेश्वरीम् ।
नामभिः कृतसहस्रसंख्यया दिव्यरूपमनुयायिभिर्निजैः ॥१॥
ब्रह्मलोकविषया सरस्वती तानि तानि रचयत्यनर्गलम् ।
दर्शनानि निजदर्शनेप्सया दृष्टिदृश्यविषयैक्यभाञ्जि सा ॥२॥
सैव विष्णुभुवि वैष्णवी परा चित्ररत्नगणभूषणाम्बरा ।
मोहयत्यमरवर्यतद्रिपूनिन्दिरेति विदितात्मविभ्रमैः ॥३॥
नाकगा मघवदादिपालिका बालिकापि सततं सनातनी ।
दैत्य[1]मूषभयकृद् बिडालिका लालिकेन्द्रपदवीमुपेन्द्रतः ॥४॥
तामुषर्बुधपुरेऽपि तज्जना लोककीलपरिशीलिताकृतिम् ।
देवनाथमुखतृप्तिकारणं केऽपि हन्त रुचिमित्युपासते ॥५॥
तामिमां सनियमैर्यमैर्भजन् धर्मराडपि नियामयत्यदः ।
अस्तशङ्करसमस्तदुर्भयो दुर्नयेन न जितः सदोर्जितः ॥६॥
ईश्वरीं त्रिजगतः स्वरक्षिकां सर्वदेवकृतवैरशङ्कितः ।
रक्षसां गण उदारविभ्रमां सेवतेऽपि सततं सपर्यया ॥७॥

१. दैत्या एव मूषकास्तेषाम् ।

सत्त्वतत्त्वविदितो विनेतृतां नेत्रवानपि जडाधिपः शिवाम् ।
भूषयत्यतुलरत्नराशिभिः संस्कृतैर्नवनवै रसेश्वरीम् ॥८॥
प्राणिनां सततजीवसाक्षिणीं प्राणशक्तिमुदयत्सदागतिः ।
वाहयत्यमलगन्धवाहनस्तां स कोऽपि निजसिंहवाहने ॥९॥
यक्षिणीप्रभुमधीनरूपिणीं यक्षराडपि निधीश्वरः शिवाम् ।
राजराजपदवीमपि श्रितस्तर्पयत्यनिशं धनार्पणैः ॥१०॥
कालकामदमनक्षमैरपि भैरवैस्त्रिपुरभैरवीरवैः ।
तोष्यते सनिगमागमागमैः सैव कापि कृतकृत्यतां गतैः ॥११॥
तां कुमारजननीं कुमारिकां संस्मरन् निजकुमाररूपभृत् ।
देवदेवपृतनां नयन्नयं किं कुमारयति नैव षण्मुखः ॥१२॥
पूर्वदेवनिवहोऽपि तामिमां निर्विशेषविषयस्थितिः स्मरन् ।
काम्यरूपपरिचायकोऽकरोत् कौशिकं हतपदं न कौशिकम् ॥१३॥
तां समाधिषु हतासमाधयः सन्निधाविव विलोकयन्त्यहो ।
लुप्तलोककविलोकलोकधीविभ्रमाः सनकमुख्ययोगिनः ॥१४॥
मर्त्यमत्र मृतजीवनाख्यया विद्ययामरकलामपि क्षमौ ।
नेतुमस्तकलिकालकल्पनामश्विनौ प्रणमतो रसेश्वरीम् ॥१५॥
विश्वतोऽपि विनिवेश्य संविदं विश्वनाथदयितापदोर्हृताम् ।
विश्वनामकदिवौकसो गता विश्वतोपमधिविश्वपूजिताः ॥१६॥
वासवेन वसुनापि वासिते मौलिवासिमणिकान्तिवासनैः ।
वासयन्ति वसनैरदःपदे चेतसीह वसवोऽप्यवासने ॥१७॥

---

१. ज्ञानं च । २. वेदाश्च शास्त्राणि च तेषामागमनं येषाम् ।
३. भमौ कामस्य । ४. उलकम । ५. चित्तपीडाः । ६. अग्निना ।

ग्राममध्यमुपनीय मूर्च्छितैः सस्वरैरमरगाथकैरियम् ।
गीयते तदपदानसुप्रथैर्नामभिः प्रतिपदं कृतार्चनैः ॥१८॥
तां विदन्ति परविद्ययाद्यया हृद्यया सहजयानवद्यया ।
सद्य एव चितगद्यपद्यया तद्धरा रहितजाड्यवेदनाः ॥१९॥
वादनादमनु गीतमप्यनु रागसागरनिरर्गलोत्तरम् ।
आदृता गतिगतं त्रिधा लयं तोषयन्त्यमरनर्तका इमाम् ॥२०॥
साध्यसिद्धकलनातिगामिनीं राधयत् परमशम्भुकामिनीम् ।
साध्ययूथमभिसाधयत्यदोवेदनाय हृदये सुसंविदम् ॥२१॥
सिद्धियूथपरिचायचञ्चुरः सिद्ध्यसिद्ध्यतिगसिद्धिसाधिनीम् ।
सिद्धसङ्घ उपधावितुं विदं तामिमां प्रयतते समाधिषु ॥२२॥
अप्सरोभिरनिशं रसाप्सरोमूर्तिभिर्ललितलास्यनर्मभिः ।
हावभावचतुराभिरीश्वरी तोष्यतेऽपि रसराजराजिता ॥२३॥
गुह्यगुह्यविषयां विशेषणैर्गूहितप्रकृतचिन्तनादृताम् ।
गुह्यका अपि निगूहयन्ति तां हृद्गुहागहनगेहकोटरे ॥२४॥
यक्षकर्दमविलेपनादिव कालिकामखिलकालकालिकाम् ।
यक्षकाः सकलरक्षिकामिमां रक्षयन्ति हृदये सदा स्मृतेः ॥२५॥
भूतभूतिविभवां भवाभवां भूतभव्यभवदुद्धिदाभिदम् ।
भूतनायकविभूतिमीश्वरीं भूतयूथमिह भावयत्यमूम् ॥२६॥
बोधतर्जितजगत्पिशाचिकां याचमानजनयाचनापहाम् ।
अश्वयन्ति विचिते पिशाचकास्तां स्वचेतसि चितं कथञ्चन ॥२७॥

---

१. विद्याधराः । २. रसात्मकजलसरसीमूर्तिभिः । ३. क. 'संमुखी' पाठान्तरम् ।

निर्गुणां गुणगणैरलङ्कृतां गौणतातिगगणाधिपा गणाः ।
गौणतत्परकृतप्रथायुतैस्तां सदैव गणयन्ति नामभिः ॥२८॥
तां ध्रुवेण परिचिन्तयन् ध्रुवां सुध्रुवे पथि गतोऽपि निर्द्रवः ।
निर्ध्रुवं जगदिदं विलोकयन् किं ध्रुवत्वमगमन्न स ध्रुवः ॥२९॥
सामभिर्विमलनामनामितैर्वामकामदमनाः स्वकामदाम् ।
काम्यधामगमनाः समागमां[1] रामयन्ति मुनयोऽपि सप्त ताम् ॥३०॥
निग्रहेऽपि जगतामनुग्रहे तां गृहीतविहितग्रहा ग्रहाः ।
विग्रहे पथि चिदात्मविग्रहां ग्राहयन्ति च नवं नवं नवम्[2] ॥३१॥
तां शनैश्वर इमां शनैः शनैर्दूषणेन विकलैः सुभूषणैः ।
दर्शनैरभिचिनोति चेतसा प्राप्तलोकपरलोकदर्शनैः ॥३२॥
पूर्वदेवपरिवञ्चनाञ्चितशास्त्रनिस्रपितदेवनायकः ।
गौरवं गुरुषु गूरयन् गुरुस्तां गृणाति त्रिजगद्गुरुं गुरुम् ॥३३॥
मङ्गलो गलितगाल्य[3]मङ्गलो मङ्गले प्रथमपूज्यतामितः ।
पूजयत्युदितसर्वमङ्गलामङ्गलघ्नशिवसर्वमङ्गलाम् ॥३४॥
भास्करश्च निजलोकभासितो भासिताखिलजगत्त्रयीं शिवाम् ।
भासयन् मुकुटभासिभिः पदे रत्नराशिभिरिमां भजत्यरम् ॥३५॥
काव्यकौशलकलाकृदेकलः श्रौतमार्गपरिधानचातुरीम् ।
आश्रितः परमशक्तिसक्तधीस्तां कविश्च कवयत्यनर्गलम् ॥३६॥
सौम्य एव गुणतोऽपि सर्वदा न ग्रहा इव शुभादि भावयन् ।
निर्णयेन स बुधोऽत उद्बुधां सौम्य ईश्वरितमां भजत्यलम् ॥३७॥

---

१. सर्वे समा आगमा यस्याः, सम्यगागम्यते या सा, सम्यगागमनं यस्याः । २. स्तुतिम् । ३. संसारस्य ।

चन्द्रमा अविरतं सुधाभृतां चन्द्रिकां पथि पथि प्रसारयन् ।
अर्चति प्रभुमुदारविभ्रमामुत्पलैः स्वयमिमां विकासितैः ॥३८॥
तिग्मभानुहिमभानुतर्जनो वर्जितान्यभपतिक्रमार्जनः ।
स्वर्गभानुरपि पुच्छमूर्च्छितो व्याप्तभानुमिह भावयत्यमूम् ॥३९॥
कुम्भसम्भवमुनिः सुदक्षिणो दक्षिणां दिशमुपाश्रितः स्थिरम् ।
दक्षमन्युदमनीमणीयसा चेतसा स्मरति बोधदक्षिणाम् ॥४०॥
पुण्यकर्मचितनामधामभिः सद्गुणैः सुरभिमेव निर्गुणाम् ।
अन्तरिक्षगजना नमन्ति तां संज्ञया सुरभिलोकमुख्यया ॥४१॥
वायुवेगगतयोऽपि खेचराः स्वस्वभावपरिभावुकामिमाम् ।
वीजयन्ति निजपक्षसञ्चयैः खेचरेश्वरितमां सुचामरैः ॥४२॥
मानवाश्च भुवि सत्त्वमानिनो माननीयमहसं मनीषिणः ।
तां नमन्ति पृथगात्तमानदां कुत्र कुत्र च निजेष्टदेवताम् ॥४३॥
भूधृतत्वविदिताश्च भूतले शेषमुख्यजनता जनेश्वरीम् ।
संगृणन्ति विनिमेषदर्शनाः शेषशेषविषयां विशेषणैः ॥४४॥
इत्थमत्र परमेश्वरीमिमां प्राणिनः परमभक्तिसक्तयः ।
पूजयन्ति जपहोमतर्पणैर्भूरितन्त्रविहितैर्हितैस्ततैः ॥४५॥
स्तोत्रराजमिममाकलय्य सा लोकलक्षणविलक्षणं मया ।
स्पष्टमाशु विहितं गुरुक्रमादाविवेश किल मां मुदं गता ॥४६॥
तत्प्रभृत्यनवमं क्षमं समं प्राप्तमीश्वरतरास्पदं मया ।
येन कर्तुमपि हर्तुमन्यथा कर्तुमेतदखिलं क्षमोऽस्म्यहो ॥४७॥
सोऽहमस्म्यणुरणीयसां महान्ज्यायसामपि गरीयसां गुरुः ।
गणतोऽपि च लघुः स्थवीयसां सुस्थिरः सकलकाम्यकामदः ॥४८॥

---

१. सैंहिकेयः ।

ईशितास्मि वशिताभ्यलङ्कृतः प्राप्तगम्यपददानदक्षिणः ।
सर्वमात्मकलया विभावयन् भावमेष भव उद्भवाभवः ॥४९॥
सच्चिदद्वयसुखोर्मिधर्मवानूर्मिमुक्तमहिमा स्वतन्त्रया ।
एतयोन्मिषितसम्मुखीनया तत्तदभ्यरचयं चराचरम् ॥५०॥
बिन्दुमाविरुपकृत्य बीजतः सङ्क्रमय्य तदिदं पुनर्द्वयम् ।
रेखयाखिलपुटत्रिसंज्ञया वर्णशब्दपदवाक्यता ततः ॥५१॥
तत्समूहमधिकृत्य सुस्मृतं तानि तान्यरचयं सुदर्शनः ।
दर्शनानि हृतदृश्यदृक्कया शब्दसर्ग इति निर्मितो मया ॥५२॥
उन्मिमेष परशक्तिरादितस्तत्सदाशिव इतः स्वविद्यया ।
ईश्वरत्वमगमत् त्रिधाद्युतिं तत्स्वशक्तिविवृतं त्रिकृत्यकृत् ॥५३॥
मायया नियतिकालरागितातत्कलाकलितयापि विद्यया ।
कञ्चुकैरिव वृतः स पौरुषीमागतः प्रकृतिमुत्कृतां गुणैः ॥५४॥
ख्यात एष किल जीवसंज्ञया चित्तबुद्धिहृदहंकृतैः क्रियाः ।
आन्तरीर्विरचयन् बहिस्तथा शब्दितादिगुणिभिर्दशेन्द्रियैः ॥५५॥
तद्गुणेभ्य उदभूद् विभूतये पञ्चभूतकलना ततो जगत् ।
आकरा अपि जरायुमौलयस्तत्र भान्ति पृथगीश्वरेच्छया ॥५६॥
तच्चतुर्दशविधं चतुर्दशैरावृतं भुवनराशिभिः पृथक् ।
भूतयूथमभिभाति भासितोऽप्यर्थसर्ग इति शक्तितो मया ॥५७॥
तामिमां समवलम्ब्य निर्मितं विश्वमित्थमतिगह्वरं मया ।
वेद्मि तां सकलकारणं शिवां पूजयामि च जपामि भावयन् ॥५८॥

---

१. अभवो मुक्तिरूपः । २. त्रयाणां महेशानां वामाज्येष्ठा-रौद्र्यधिष्ठितानां ब्रह्मादीनां वा कृत्यं करोति ।

नन्दिकेश्वर परापरामिमां शक्तिमेव मदनुग्रहास्पदम् ।
आख्ययाचितसहस्रसंख्यया स्तोत्रतां गमितयाभिनौमि ताम् ५९॥
इत्युदीर्य विरतं महेश्वरं तं चराचरगुरुं विभुं पुनः ।
स प्रणम्य शिरसा कृताञ्जलिर्नन्दिकेश्वर उवाच वाक्पतिः ॥६०॥
देवदेव परमेश शङ्कर लोकनाथ भगवन् नमोऽस्तु ते ।
दासदासपदवीं गते मयि संप्रसीद भवदेकसंश्रये ॥६१॥
नो विधेर्न नृहरेर्हरेर्न वा नेतरस्य च कदापि कुत्रचित् ।
आदृतोऽस्मि शरणं त्वदेककप्रीतिभक्तिरिति धार्ष्ट्यमारभे ॥६२॥
क्षम्यतामिदमुदीर्यतां च ततस्तोत्रमेतदमरेशदुर्लभम् ।
नाद्य यावदधिकामितं मया नार्थनादिरफलत्वमर्हति ॥६३॥
यद्यपि प्रभुरहस्यमद्भुतं श्रोतुमिच्छति मनो हि मामकम् ।
यद्यवाच्यमपि तत्तथापि मे वाच्यमेव दयया दयाश्रयैः ॥६४॥
चेद् वदन्ति विभवो न गुह्यतां यातमेतदपि तत् क्व याम्यहो ।
जन्म यावदभिराधयञ्छिवं राधना हि परसिद्धिसाधनी ॥६५॥
वादिता गुरुवरैर्महेश्वरैर्नार्हतीति यदि नीतिरस्त्यपि ।
तां चरेत्तदपि तत्त्वमप्यनु ह्यन्यथा भवति निर्णयः कुतः ॥६६॥
तद् विधाय करुणामनुत्तरां प्रेष्यभावमपि मे विचिन्त्य तम्[1] ।
स्वामितामपि निजां स्तवेश्वरं वक्तुमर्हसि विभो प्रभाविणम् ॥६७॥
भैरवं वपुरवेक्ष्य तेऽप्यहो प्रश्न एष विषये परे मुहुः ।
यद्विधीयत इदं न युज्यते ह्युत्तमाय विजयो मृतिः समे ॥६८॥
प्रागपि प्रतिमुहुः प्रभुस्मृतेरुत्कमास[स्त] मम तत्र मानसम् ।
अद्य तु श्रुतमहानुभावतो भूय एव परितः समुन्मिषत् ॥६९॥

---

१. ख. 'ताम्' पाठः ।

यत् कुमारगणपादिभिरपि न श्रुतं सुरवरैस्तदेव चेत् ।
प्रोच्यते मयि मम प्रसिद्धतां याति भक्तिरपि ते दया तदा[1] ॥७०॥
केवलं न मयि ते दयाप्यसौ किन्तु भक्तजनतामपि प्रति ।
त्वन्मुखोद्गतमिमं विचिन्त्य यत् को न नौति नवराजमद्भुतम् ॥७१॥
वेद्यते हि विभुचित्तमप्यमुं नेतुमुद्गतमिह प्रसिद्धताम् ।
अद्य यावदपि यन्न वान्यथा पृष्टमद्य तु कथं न पृच्छ्यताम् ॥७२॥
इत्थमेतदखिलं विविच्यतां प्रोच्यतां च नवराडनुत्तरः ।
यन्न देयमपि तद् दयाधनैर्दीयते किमु न पादसेविने ॥७३॥
इत्थमस्य वचनैः प्रभुप्रभुर्निर्वृतः सविनयैर्नयस्थिरैः ।
योग्यतामपि विविच्य सच्छ्रुतौ स्माह किं न सुलभं सदाश्रयात् ॥७४॥
नन्दिकेश्वर पुराप्यभूद् भवान् द्वारगो रहसि दृष्टदिष्टवान् ।
तत्फलं परिणतं त्विदं मतिर्यद् विशेषविषयेऽनुयोगिनी ॥७५॥
नानुयोक्तुमभवन् क्षमाः परे केऽप्यदः स्तववरं वरस्थिरम् ।
कैरपीदमनुयुक्तमीरितं नो मयापि समयप्रथाविदा ॥७६॥
त्वं तु केवलमनन्यसंश्रयस्त्यक्तसर्वकलनश्च मां प्रति ।
जन्म यावदधिकाधिकं भजन् पात्रतामत इतोऽसि तच्छ्रुतौ ॥७७॥
पूर्वमेव तपसाऽस्मि तोषितो दिव्यवर्षसुकृतेन भूयसा ।
तत्फलं हि तव हस्तगं यतो द्वारगोऽसि सततं रहस्यपि ॥७८॥
ईहते न कतरः परः सुरस्तत्पदं त्वयि हि यत्परं स्थिरम् ।
कः शिवे प्रयतते न वा निजे कस्य चित्तविधिरेति पूर्णताम् ॥७९॥
तत्पदस्थितिफलं त्विदं तव पप्रथे यदनुयोगमाचरः ।
कुत्रचित् सुसमयेऽत्र मेऽपि यद् वाचि घूर्णितमतेरिवादरः ॥८०॥

---

१. ख. 'तया' पाठः ।

सत्यमेव नियतोऽसि मत्प्रियः सर्वतोऽपि परिपृष्ट एव यत् ।
मत्तवत्परमरं स्तवेश्वरं स्वातिगुह्यमपि बाह्यमाचरम् ॥८१॥
अद्य यावदभवो बहिर्भवे केवलं रहसि मेऽधिकारवान् ।
अद्य तु श्रुतमहानुभाववागान्तरेऽपि परमेऽसि कोऽप्यहो ॥८२॥
यात्यतीव विवृतं मया ह्यदः स्तोत्रमत्र किमु न प्रसिद्धताम् ।
तत्र वृत्तमपि ते सदाह्वयं को न नौति सकलोपकारकम् ॥८३॥
नन्दिकेश्वर तदित्थमुद्गतं स्तोत्रराजमिममद्भुतं शृणु ।
तं निशम्य तदनुग्रहार्थिषु त्वं तथा प्रथय मद् यथाध्यगाः ॥८४॥
स्तोत्रराडयमनुत्तरोत्तरो नामभिर्दशशतैः सुकामदः ।
स्मार्य एष परिजप्य एष वा पाठ्य एष हवनीय एष च ॥८५॥
ध्यानपाठजपहोमतर्पणैः सोऽस्य सिद्धिनिवहो न दूरतः ।
दुर्गयोगपदवीं परामपि यः प्रयातुरपि लब्धिसंशये ॥८६॥
यत्प्रयातकलनः स्वमीश्वरं प्राकृतोऽप्यवमतान्यसंकथः ।
मन्यते द्विविध एष सोऽध्ययादस्य भोगनिवहः क्रियानिव ॥८७॥
किन्तु यद्गत इतो निवर्तते नैव भूय इह वास्ति यन्मयः ।
सापि मोक्षविवृतिः सुहर्षभूरध्ययादिकवशाऽवशा भवेत् ॥८८॥
विधाय शुद्धिं त्रिविधां प्रतिष्ठामपि प्रयुक्तोत्तमजीवघोषः ।
न्यासैक्यभूषः स्मृतिमांस्त्रिकालं पठेदिमं प्रत्ययतः प्रगे वा ॥८९॥
एतत्स्तोत्रं श्रुतिमधिगतं स्मार्यरूपं स्मृतीनां
दृष्टीनां च प्रथमविषयं ज्योतिषां ज्योतिरेकम् ।
साहित्यानां गतमतिरसोद्धारतामादिशक्तेः
पूजं पूजं प्रणमति न कः सारसर्वस्वभूतम् ॥९०॥

स्वस्वातन्त्र्यपरानुभूतिकलयावश्यंभवित्र्योद्धृते
साहिब्कौल इति प्रथावति पदे निर्माति यः स्मासनम् ।
तत्काव्ये शिवशक्तिपूर्वकविलासानूद्धृते संभृते
शक्त्यङ्केन विलासनाम्नि महिता भक्तिर्गता पञ्चमी ॥९१॥

इति श्रीमहामाहेश्वराचार्यवर्यश्रीसाहिबकौलानन्दनाथ-
विरचिते नामविलासे पञ्चमी भक्तिः ॥ ५ ॥

---

•

## षष्ठी भक्तिः ।

स्तोत्रेशेऽस्मिन् मुनिरहमहन्तापरामर्शहेतु-
श्छन्दोऽनुष्टुप् कथितमकथा देवता सादिशक्तिः ।
नानासिद्धौ भवति विनियोगश्चतुर्धा[1] प्रसिद्धे
पुंभावे वा स्मृतिजपहुताघ्येतृतातर्पणेषु ॥१॥
शम्भुश्चक्रे यानि नामानि देवदेव्याः स्पष्टं पूर्वमुद्देशपूर्वम् ।
साहिब्कौलस्तानि भक्त्येकवश्यो वृत्तैरर्थं लक्षयद्भिर्बबन्ध ॥२॥
विष्णुमायाभिधे सिद्धसरस्वत्यपि वर्णिते ।
पर्यायेणेह षष्ठ्या[2] च तरुणाख्योपपादिता ॥३॥
क्वापि क्वाप्यन्यनामानि विग्रहान्तरितानि च ।
वर्णितानि न दूष्याणि तान्युद्भावनया स्वयम् ॥४॥
निराभासोऽप्यादावहमिति समाभास्य विविधैः
स्वशङ्काङ्कैर्भावं स्वमिव मलिनैर्योजयति यः ।
प्रतीपं प्रज्ञानात्पुनरपि तमेवाद्भुतमयं
सरत्येकं सद्यः किमपि च चिदात्मैष जयति[3] ॥५॥

---

१. धर्मार्थकाममोक्षार्थं विनियोगः । २. विभक्त्या । ३. 'जपति' पाठः ।

निश्चेत्यापि विचेत्यभावकलनाभासस्वरूपेव या
यैकाप्येव मतेषु भूरिषु परं नानाख्यया श्रूयते ।
या जन्मादिविधौ विभुर्विमलभा अस्यात्मतन्त्रा परा
सैषा काचिदखण्डहर्षविभवा चित् स्फूर्जतात् स्वत्विषा ॥६॥

परमतुलमनन्तं बोधयत्यात्मभावं
विरचयति च सद्यो मृत्युचिन्तापहारम् ।
रसयति रसराजं सर्वतः पूर्णपूर्णं
मम मतिरथ चैवं शक्तिनाम्नां विलासः ॥७॥

शृङ्गारी स्वमतौ हसञ् जनगतिं भक्तेषु कारुण्यवान्
वीरोऽहङ्कृतिपातने श्रमततौ रौद्रो मनःकर्मणाम् ।
भीतेर्हेतुरसज्जुगुप्सनपरः सर्वैक्यलीलाद्भुतः
साहिक्कौलरसेश्वरो विजयते शान्तात्मताभास्वरः ॥८॥

अनपिहितभावबोधां नानाकामाधिकामितां विबुधैः ।
अभिनवरसराजीं तां परादिविद्येश्वरीं वन्दे ॥९॥

महाविद्या ॥१॥

परा या चिद्रूपा स्फुरितविभवान्तः स्मृतवती
बहु स्यामित्येका तदनु तनुते तत्सममिदम् ।
विचित्रं शुद्धाध्वप्रभृतिमतिविश्राममभिदा
महाविद्याऽनाद्या विशदसुखदे यच्छतु पदे ॥१०॥

जगन्माता ॥२॥

प्रसूते हूतेन[1] प्रतिनियतरूपेण च परा
निरूप्यं चिद्रूपा जगदगमेयं[2] निष्परिचयम् ।

---

१. नाम्ना । २. स्थावरजङ्गममयम् ।

प्रपञ्चं या स्वच्छा मुहुरिह गृणन्तं झगिति मां
जगन्माता पाताज्जगदघनिपाताद् भगवती ॥११॥

महालक्ष्मीः ॥३॥

स भिक्षुत्वं दिक्षु श्रयति नहि यत्संश्रयवशात्
प्रशास्ता दैत्यानां पतिरपि च पत्युर्भवति या ।
हृदि स्थित्या नित्यं विरचयतु दौर्गत्यमभितो
महालक्ष्मीः सा नो ललितफलिता दुर्गतिततेः ॥१२॥

शिवप्रिया ॥४॥

यदासक्तो नक्तन्दिनमिनपदं तत्सुविपदं[1]
विदित्वा दत्त्वाढ्यं स शिव इतरेभ्यः स्वयमलम् ।
श्मशाने निःशून्ये वसति च परं नन्दति शिव-
प्रिया ध्येया देयात् सहजनिजभक्तिं[2]श्रियमियम् ॥१३॥

विष्णुमाया ॥५॥

विनिर्माय स्फायत्सहजनिजतन्त्रत्वविभवा-
दहो मोहं धत्ते स्वयमपि ययेदं श्रितगतिः ।
स विष्णुश्चाप्यात्मा विततमितमातृभ्रममया-[3]
ज्जनं विष्णोर्माया परमरमपायादवतु सा ॥१४॥

शुभा ॥६॥

शुभत्वं दुःशोभे भवति च भवे मोहविभवे
यदीयाद् दुर्ध्येयादपि परकृपापातसुलभात् ।

---

१. 'विशदं' पाठान्तरम् । २. क. 'बोध' पाठान्तरम् । ३. पशुप्रमातृभ्रममयात् ।

विशोकादालोकात् प्रथितविततालौकिकधियां
शुभा शुभ्रं विभ्रंशितकलिमलं शं वितरतात् ॥१५॥

शान्ता ॥७॥

नितान्तं दुःशान्तो भजति विजितश्चित्ततुरगो
यदाश्रित्या हित्वा भ्रमामिममभीभिः सुकृतिभिः ।
निवृत्तिं दुर्वृत्तः सकलमलदायाः स्वदयया
स्थितिं शान्ता दत्तां सततममिता सात्मनि समाम् ॥१६॥

सिद्धा ॥८॥

प्रकाश्यैक्यात् सिद्धिं घटयति चिदात्मा घटयितुं
न तत्स्वेनासिद्धः कथमथ जडो यत्र परितः ।
विकल्पैर्या नद्धा कथमपि न नद्धापि भवति
प्रसिद्धा सिद्धा सा निरुपधि सुसिद्धिं वितरतात् ॥१७॥

सिद्धसरस्वती ॥९॥

गुरोः शिक्षाभिक्षां वदनसदनाच्छास्त्रमपि या
विना शिष्यत्वं वा समुदयत आनन्दलहरी ।
समिद्धा सिद्धैः सा विदितगदिता नित्यमिह त-
त्सरस्वत्यम्बा मां रसयतु रसज्ञैः सुरसिता ॥१८॥

क्षमा ॥१०॥

यदालम्बाद् बाधा भवति न सदा दुर्जनभुज-
ङ्गमात् क्षामा स्पर्धा भवति च निबद्धा मतिहतैः ।
सतां भाता सम्यग् हृदयदिवि सद्बोधविशदा
क्षमा कामं सा मामवतु पशुपर्षत्परिगतेः ॥१९॥

कान्तिः ॥११॥

अनङ्गः सद्भङ्गैः कुसुमसमयामात्यमबला-
बलोऽपीप्सुः पुष्पैः प्रतिहितमहास्त्रो रतिरतः ।
यदासङ्गाद् गङ्गाधरमपि परिक्षोभमनयत्
स्वकान्तिं सा कान्तिर्वितरतु जगन्मोहविषयाम् ॥२०॥

प्रभा ॥१२॥

यदालोकात् स्तोकादपि सपदि जन्तोः पदि पदि
परं यस्मिन् कस्मिन्नपि भवति हाहेति मुखगम् ।
यया मुक्तं युक्तं रचयति रुचिं नैव किमपि
प्रभा साभामाभासयतु कुतुकात् कामपि समाम् ॥२१॥

ज्योत्स्ना ॥१३॥

यया ग्लौरप्यानन्दयति निखिलं लोकमुदितो
विपत्तापं हित्वा श्रयति च यतः शीतलसुखम् ।
जनः सा नक्षत्राणां प्रतिकृतिमतीताकृतिमतां
भव ज्योत्स्ना कृत्स्ना तिमिरसमरे दुर्गतिकरे ॥२२॥

पार्वती ॥१४॥

समक्षं दक्षेणानवसरमवज्ञापिततया-
वतारं या तारं गिरिवरनिकाय्ये कृतवती ।
सुसूत्रं तद्गोत्रं समनयदनन्तां प्रथिततां
कृपां पार्वत्येषा दिशतु सुदशावाप्तिसफलाम् ॥२३॥

सर्वमङ्गला ॥१५॥

विभानात् सत्पदप्राप्त्यै यद्ध्यानान्मङ्गलं परम् ।
भवेत् सर्वत्र सा जीयाद् भवानी सर्वमङ्गला ॥२४॥

हिङ्कुला ॥१६॥

निषण्णा षण्णामप्युपरि कटकानामघवता-
मगम्या या काम्या शुभविभवसारैक्यविदुषाम् ।
शुभाङ्गी निःसङ्गीकृतनिजपदा कापि किल हि-
ङ्कुला बाला कालान्तकहिततमा मामवतु सा ॥२५॥

चण्डिका* ॥१७॥

सुनाट्योद्दोर्दण्डत्रुटितवियदासंस्खलदुडु-
स्फुरत्पुष्पैः कीर्णेव सुरवरपूगैरगंसुखैः ।
सुरारीणां हत्या समरसमये सा सपदि च-
ण्डिका चण्डा वध्यादपदविपदं दुर्गदपदाम् ॥२६॥

दान्ता ॥१८॥

कृपाक्रान्तो दान्तो भवति भवभोगादतिहतात्
परस्या यस्या दुष्कपटघटनीयाद्रसरसात् ।

---

१. भैरवः ।

* आन्दोलद्भुजदण्डखण्डितनभोनिष्क्रान्ततारास्फुरत्-
पुष्पैः कीर्णकलेव देवसुरराड्वृन्दैः प्रमोदाश्रितैः ।
दैत्येन्द्रद्रुमदारणाज्यवसरे सा चन्द्रचूडाम्बिका
चण्डां चण्डविघातिनी कलिमतिं वध्यात्परा चण्डिका ॥
श्लोकान्तरमिदमधिकं पठ्यते ।

२. निश्चलं सुखं येषाम् ।

सुदुस्त्याज्याच्चापि प्रथयतु परे धामनि मनः-
सुविश्रान्तिं दान्ता कृतकृतकहर्षाद्यतिहतिः ॥२७॥

पद्मा ॥१९॥

स्वपुण्यानां पाकात् कमलममलं या कृतवती
यतेर्भीतिव्याजान्न भजति तदाद्यस्थिरतया ।
जगत्स्तुत्यं वाच्यं सशमसुषमं हृत्कमलजं
पदं पद्मा पद्मोद्भवमुखनुता सा रचयताम् ॥२८॥

लक्ष्मीः ॥२०॥

यदालम्बात् संभाषणमपि जनो दोषगुणिभि-
र्नरैः साकं पाकं नतनु[1] मनुते सत्कृतिततेः ।
सदाह्लादामृद्धिं रचयतु शुचिं सा नवनवां
परा लक्ष्मीर्हाराकलितकुचभारालसगतिः ॥२९॥

हरिप्रिया ॥२१॥

क्रियाः कृत्वापि यैश्चित्तं जितं नाप्तं हितं च ते ।
हरिप्रियादयापूर्णकटाक्षानीक्षिताः किल ॥३०॥

त्रिपुरा ॥२२॥

त्रिपुरेति शिवां ध्यायन् यदस्म्यानन्दघूर्णितः ।
त्रिपुरेश्वरतां जाने तन्मत्तो नातिरिच्यते ॥३१॥

नन्दिनी ॥२३॥

यद्दयाधिगतसुन्दरेन्दिरानन्दितो हसति वा पुरन्दरम्
नैककष्टकृतमन्दिरं दिवि नन्दिनीति गदितैक्यवर्धिनी ॥३२॥

---

१. अतनु ।

नन्दा ॥२४॥

नानन्दं नन्दनोद्यानविहारे मनुतेऽतनु ।
नन्दाभक्तिसुधासिक्तचित्तः कृत्तपुनर्भवः ॥३३॥

सुनन्दा ॥२५॥

नन्दनाद्यात्मभावेन[1] खिन्नः चणविनाशिना ।
सुनन्देत्यभिनन्द्य त्वां भूतोऽस्मि विगतज्वरः ॥३४॥

सुरवन्दिता ॥२६॥

सुरां हृत्वासुरान् जित्वा विपञ्चीस्वरनादिनी ।
सुरान् या नन्दयामास सैव त्वं सुरवन्दिता ॥३५॥

यज्ञविद्या ॥२७॥

ध्यायंस्त्वां यज्ञविद्येति चिदग्नाविन्द्रियाहुतीः ।
यजति प्राणयज्ञाद्यैः कोऽपि नैपुण्यपुण्यभाक् ॥३६॥

महामाया ॥२८॥

एकोऽपि यामधिष्ठाय साक्षी त्रैश्वर्यलीलया ।
सृष्ट्यादि रचयत्येषा महामायेति गीयते ॥३७॥

वेदमाता ॥२९॥

ओंकारमातृकं वेदं या निर्वेदवते स्तुता ।
प्राहिणोद् ब्रह्मणे तुष्टा वेदमाता जयत्यसौ ॥३८॥

सुधा ॥३०॥

यदास्वादात् परब्रह्मबोधास्वादं च[2] मन्वते ।
विघ्नमेवामरा भक्त्या सुधा साऽऽस्वाद्यतां बुधाः ॥३९॥

---

१. पुत्राद्यात्मभावेन । २. चोऽप्यर्थे ।

धृतिः ॥३१॥

यमाद् भ्रमात् क्रमात् कामान्नाप्युज्झति गुणं मतिः ।
कृतिनां स्वं यदाश्रित्या धृतिर्लभ्या कथं चलैः ॥४०॥

प्रीतिः ॥३२॥

पद्मसूर्यादयो बन्धुभावे जात्वपि दुर्घटे ।
संयोजिता यया क्वापि प्रीतिः कीर्तिं परां गता ॥४१॥

प्रथा ॥३३॥

मतं प्रथितवद्भिश्च शक्यते न पृथक् पृथक् ।
यापह्नोतुं स्वयंभाता प्रथा सिद्धा क्व नैव सा ॥४२॥

प्रसिद्धा ॥३४॥

पृथक् पृथक् स्वलीलायै स्फुरन्त्यपि दिगादिषु ।
निजैकवपुषैवेह प्रसिद्धा सिद्धिदास्तु नः ॥४३॥

मृडानी ॥३५॥

उग्रो भीमोऽपि यन्नाम्ना मृड इत्यागतः पराम् ।
कीर्तिं सर्वत्र तन्नूनं मृडानीसञ्ज्ञगौरवम् ॥४४॥

विन्ध्यवासिनी ॥३६॥

गजारूढा निजावन्ध्यस्वाच्छन्द्यानन्दसुन्दरी ।
अबन्धुरं सुदुर्बन्धं छिन्धि त्वं विन्ध्यवासिनी ॥४५॥

सिद्धविद्या ॥३७॥

अन्तर्वाह्निरुपादानं सिद्धविद्यापि बाह्यतः ।
विश्ववैचित्र्यनिर्माणहेतुर्जयति सा परा ॥४६॥

महाशक्तिः ॥३८॥

निर्भित्ति निरुपादानमसद् सद्वत् प्रकाशयेत् ।
इदं कथं महाशक्तिसक्तिः पशुपतिर्न चेत् ॥४७॥

पृथ्वी ॥३९॥

बीजानामपि या बीजमेकं नैकतयान्तरे ।
संयोजयत्यहो सेयं पृथ्वी जगति गीयसे ॥४८॥

नारदसेविता ॥४०॥

कलेरेकनिदानं च सत्यवाक्त्वप्रथां गतः ।
ब्रह्मपुत्रः स यद्भक्त्या सा त्वं नारदसेविता ॥४९॥

पुरुहूतप्रिया ॥४१॥

प्रस्तोतुं शक्यते केन पुरुहूतप्रियादया ।
यद्भक्तलालनायागादपि विष्णुरुपेन्द्रताम् ॥५०॥

कान्ता ॥४२॥

न विलोक्य जनो मनोऽपरत्र प्रभवेन्नेतुमपि क्षणं शिवां याम् ।
कृतदुष्कृतहानिरस्तु कान्ता कृतिनां शान्तहृदां सदा समन्तात् ५१॥

कामिनी ॥४३॥

अपरात्मविबोधकृत् तमोऽहो तनुते दृष्टतयैव यामिनीव ।
कृतकालकरालदोषशान्तिर्मतिमद्भिः कलितेह कामिनीयम् ॥५२॥

पद्मलोचना ॥४४॥

किमु रोषविशेषदूषितेयं किमु सौभाग्यमदाभिभूषिता वा ।
इति वीक्ष्य यदीक्षणे हरान्तर्विचिकित्सावतु पद्मलोचना सा ॥५३॥

प्रह्लादिनी ॥४५॥

त्याज्यं च राज्यं सुधियोऽथ देवसेवार्हता चातिहतापि योगः ।
रोगो विना यद्भजनं जनस्य प्रह्लादिनी ह्लादयतां हृदेषा ॥५४॥

महामाता ॥४६॥

यदंशगुणजानां च[1] त्रिदेवानां जगत्त्रये ।
महत्त्वं प्रथितं मान्या महामाता न कस्य सा ॥५५॥

दुर्गा ॥४७॥

एकाबला बालमरालयाना या दुर्गमं[2] संगममानिनाय ।
समं यमेनातिगतार्थनामा[3] भक्तेषु सा मे जयदास्तु दुर्गा ॥५६॥

दुर्गतिनाशिनी ॥४८॥

क्षमासमा वृद्धिमती च बुद्धिर्यया प्रसिद्धिं लभते न जातु ।
तां दुर्गतिं या हरति[4] क्षणेन ध्यातैव सा दुर्गतिनाशिनी त्वम् ॥५७॥

ज्वालामुखी ॥४९॥

किं वोर्ध्वतः किं परितो न्वधस्ताज्जातेति निर्णेतुमशक्यरूपा ।
जाज्वल्यमानाविरतं ददातु ज्वालामुखी मुख्यतमां विभूतिम् ॥५८॥

सुगोत्रा ॥५०॥

तप्त्वा तपोऽनन्तसमा[5] न लभ्यं यत्तन्निराधि स्वपदं ददाति ।
जप्तैव या तप्तसुवर्णवर्णा श्रियेऽस्तु सा स्तोत्रकृतः सुगोत्रा ॥५९॥

---

१. चोऽप्यर्थे । २. दुर्गमाख्यमसुरम् । ३. सुगेत्यर्थः ।
४. ख. ग. 'हरसि' पाठः । ५. ख. ग. 'भूरि' पाठः ।

ज्योतिः ॥५१॥

व्योम्नैव किं संज्वलितं नु किंवा ज्वालामला पुष्करतां गतेति ।
पश्यन्ति यां विसयिनोऽनुभूत्या सा सर्वतो ज्योतिरिहास्तु भूत्यै ॥

कुमुदहासिनी ॥५२॥

मूर्ध्नि किं स विधुः पूर्ण इति संशयितो हरः ।
यद्धासाद् हस्तमाधत्ते सा त्वं कुमुदहासिनी ॥६१॥

दुर्गमा ॥५३॥

विना जलादेरपि दुर्गमत्र सुदुर्गमा दुर्जनवर्यपूगैः ।
या दुर्भवे दुष्कृतजे निरन्ते गमागमार्तिं हर दुर्गमा त्वम् ॥६२॥

दुर्लभा ॥५४॥

सर्वापि सर्वत्र गतापि सार्वा[2] विमर्शनीयापि सदैव सर्वैः ।
अपूर्वरूपाहतपूर्वभावा चित्रं कथं पार्वति दुर्लभासि ॥६३॥

विद्या ॥५५॥

दृष्ट्वा विधुं व्यात्तमुखाश्चकोरा इवेह सर्वे न कथं भवेयुः ।
तद्वाक्सुधास्वादनलुब्धचित्ता आद्या प्रसन्ना किल यस्य विद्या ॥६४॥

स्वर्गतिः ॥५६॥

यल्लोभसंक्षोभितचित्तवृत्तिः सुदुर्लभं मानवदेहमेनम् ।
संख्ये समङ्गीकुरुते विहातुं सा स्वर्गतिस्त्वं भवताद् गतिर्नः ॥६५॥

पुरवासिनी ॥५७॥

रक्षाविधानाय पुरा पुराणां प्रत्येकमेकापि भिदां निनाय ।
यतः पराऽसावधिदैवतं स्वं ततः प्रसिद्धा पुरवासिनीति ॥६६॥

---

१. आकाशताम् । २. सर्वेभ्यो हिता ।

अपर्णा ॥५८॥

अवर्ण्यवर्णात्म[1]समासवर्णा[2] सुवर्णवर्णा[3] कृतनैकवर्णा[4] ।
प्रियादिवर्णा[5] परमादिवर्णा[6] जयत्यपर्णा करतर्णपर्णा ॥६७॥

शाम्बरी माया ॥५९॥

चित्रेन्द्रजालं तनुतेऽद्वैते द्वैतं च तत्र तत्[7] ।
या शिवा शाम्बरी माया सा जीयात् कापि केवला ॥६८॥

मदिरा ॥६०॥

या चिन्तितैव तनुते कृतिनाममन्द-
स्वानन्दसुन्दरमबन्धनमत्र चित्तम् ।
सालौकिकीह मदिरा कथमज्ञलोकैः
शोकातुरैः परिनिषेवितुमस्ति शक्या ॥६९॥

मृदुहासिनी ॥६१॥

माङ्गहासेन मेऽस्त्वेष ध्यानात् संस्खलितो भजन् ।
इत्येव कृपया जाने सा देवी मृदुहासिनी ॥७०॥

कुलवागीश्वरी ॥६२॥

इतस्ततो भ्रमार्तानां कुलर्वाग्[8]उद्धृता यया ।
भक्तानां नन्दनायाशु कुलवागीश्वरीति सा ॥७१॥

नित्या ॥६३॥

कार्यं हि कारणगुणानुगुणं समस्ति
सम्यक् प्रसिद्धिरिति या तदियं न सत्या ।

---

१. यशो यस्याः । २. अक्षराणि । ३. पीतादि । ४. जातयः । ५. ब्राह्मणाः । ६. ओंकारो यस्याः । ७. द्वैतेऽद्वैतम् । ८. कुलशास्त्रम् ।

नित्याप्यनित्यमिदमातनुते यदेषा
चित्रैकधाममहिमा हिमभानुधामा ॥७२॥

नित्यक्लिन्ना ॥६४॥

बीजं कदाचिदपि नीरदनीरपूर-
क्लिन्नं स्फुटत्वमुपयाति निजाङ्कुराद्यैः ।
नित्यं त्विदं कथमुपोद्गतमाशु नित्य-
क्लिन्ना न चेद् भगवती जगदेकमाता ॥७३॥

कृशोदरी ॥६५॥

संसारसंहारकरी सदैव देवी शिवा त्वं यदि वाऽभविष्यः ।
सम्पूरिताशा कृतिनां तदा स्याः कृशोदरीति प्रथिता कथं नु ॥७४॥

कामेश्वरी ॥६६॥

कामेश्वरी चापि कथं न सा त्वं निष्काममन्तः कुरुषे क्षणेन ।
भक्तस्य सिक्तस्य परात्मबोधपीयूषधारानिकरेण देवि ॥७५॥

नीला ॥६७॥

सूर्येन्दुकोटिप्रतिमापि देवी संस्पर्धयेवाकृतकप्रभावा ।
सैषैकदा नीलगलस्य नीला भूताखिलाङ्गैः किमु भङ्गुराङ्गी ॥७६॥

भीरुण्डा ॥६८॥

उग्रं दण्डं दूरतो वीक्ष्य दैत्या ब्रह्माण्डान्तश्चापि भीत्या न शेकुः ।
स्थातुं यस्याः क्रूरतारोज्ज्वलाया भीरुण्डा सा मुण्डहस्तावतान्नः ॥७७॥

वह्निवासिनी ॥६९॥

प्रत्यक्षतो हविर्भोक्तुं भक्तैः प्रीत्या हुतं स्तुता ।
या वह्निवासिनी सा नः कुर्यान्निर्वासनं मनः ॥७८॥

लम्बोदरी ॥७०॥

आभासितं चापि बहिर्यदन्तरादर्शवन्नोज्झति यन्निवासम् ।
लम्बोदरीति प्रथिता ततः स्तादालम्बनं संसृतिदुर्भृगौ सा ॥७९॥

महाकाली ॥७१॥

विमुग्धं कामार्त[1] यदमलवपुर्वीक्ष्य गिरिशं
त्रपां जानन्तं तं त्रिदशतटिनी मीलितदृशम् ।
हसन्तीवोत्फेना भवति भवदुर्भानजनितं
महाकाली काल्यं[2] हरतु दयया साभिभजताम् ॥८०॥

विद्याविद्येश्वरी ॥७२॥

भातः कदापि कुत्रापि विद्याविद्ये समं न यत् ।
विद्याविद्येश्वरी सैका विधत्ते विस्मितं न किम् ॥८१॥

नरेश्वरी ॥७३॥

नरेषु नारीष्वहतां विदित्वा स्वतन्त्रतां सर्वगतापि भूता ।
नरेश्वरी शर्मकरी सदा तामाविष्करोत्वात्मगतिं समन्तात् ॥८२॥

सत्या ॥७४॥

यदध्यासादसत्योऽपि संसारो भाति सत्यवत् ।
सत्येति तां मुदा ध्यायन् कृतकृत्यो न को भवेत् ॥८३॥

सर्वसौभाग्यवर्धिनी ॥७५॥

यद्भक्त्यावाप्य सौभाग्यं कामः कामं[3] हरत्यदः ।
सर्वमेकोऽपि सा देवी सर्वसौभाग्यवर्द्धिनी ॥८४॥

---

१. ख. ग. 'कान्तं यदमलवपुषं वीक्ष्य' पाठः । २. कालस्य भावम् । ३. निश्चये ।

संकर्षणी ॥७६॥

कर्षन्तीं मधुमत्तचित्तविहगं दुर्वृत्तितो दूरतो
वर्षन्तीं कृतिनां सुधासत्रमयीं धारां परामन्तरे।
को धीमाँल्लभते परत्र[1] परमं हर्षं हि संकर्षिणी-
त्यध्यायन् कृतदुष्कृताहतिममूं दुर्मोहनिर्मूलिनीम् ॥८५॥

नारसिंही ॥७७॥

यद् भूतं न कदापि नैव च भवेत् कुत्रापि वा नाधुना
तद्रूपं प्रकटीचकार दयया यस्याः परस्या हरिः।
हत्वा दैत्यवरं स्वभक्तमकरोत् पूर्णप्रतिज्ञाभरं
प्रह्लादं च परा जयत्यतितरां सा नारसिंही शिवा ॥८६॥

वैष्णवी ॥७८॥

विष्णुतां स कथं गच्छेद् वामनाकृतिशोभनः।
भवेत् परापरा सैव यदि तुष्टा न वैष्णवी ॥८७॥

महोदरी ॥७९॥

देव्यासेव्या सदा देवैर्यदि सत्यं महोदरी।
तदा बहिः किमेतन्नु विचित्रं चित्रमातनोत् ॥८८॥

कात्यायनी ॥८०॥

ऐश्वर्यमीश्वरो व्यक्तं नैकधा पर्यणीनमत्।
यां प्राप्यैवास्तु सा नित्यं नित्या कात्यायनी गतिः ॥८९॥

---

१. ख. ग. 'यतो न परमं हर्षं न संकर्षिणी सा देयात् शुभसंपदं सुपरमा' पाठः।

चम्पा ॥८१॥

कम्पं लुम्पयतान्नित्यं मोहोद्रेकभवं भवे ।
चम्पूं[1] च सम्भृतां चम्पा प्रकटीकुरुतां सताम् ॥९०॥

सर्वसम्पत्तिकारिणी ॥८२॥

ययान्याः सम्पदस्तुच्छास्तामाविष्कुरुते यतः ।
ध्यातैव सा ततो गीता सर्वसम्पत्तिकारिणी ॥९१॥

नारायणी ॥८३॥

सुदुर्बलो माणवको बदर्याश्रमैकवासस्त्रिजगत्सु भक्त्या ।
नारायणेति प्रथितः स यस्मा नारायणी सा किल[2] दुष्प्रमेया ९२

महानिद्रा ॥८४॥

न यान् हातुं कोऽपि प्रभवति सुदुर्भावविषमा
विकल्पास्ते नूनं प्रशममुपयान्ति क्षणमपि ।
यदाश्रित्या नित्या कृतकृतकहर्षावगणना
महानिद्रा विद्रावयतु त्रिपदं दुर्गमपदाम् ॥९३॥

योगनिद्रा ॥८५॥

ययापि सुप्तः प्रतिपक्षभाव[3]प्रहारमूर्च्छां विजहाति सद्यः ।
वैशद्यमात्मीयमवाप्य हृद्यां सिद्धिं स्वयोगे कुरु योगनिद्रा ॥९४॥

प्रभावती ॥८६॥

यदग्रतो ज्योतिरिनादि[4] नैतत् प्रयोगमायाति ययोडुयूथम् ।
दिनेऽपि यद्धीनमिदं न किंचित् प्रभावती सा ददतां निजाभाम् ९५॥

१. गद्यपद्यमयी वाणी चम्पूरित्यभिधीयते । २. ख. ग. 'शिवदास्तु नित्यम्' पाठः । ३. द्वन्द्वदुःखादि । ४. सूर्यादि ।

प्रज्ञापारमिता ॥८७॥

या स्वाभासविलासतो विदधती शैलोपमं चेन्द्रियं
ज्ञातुं कर्तुमपि क्षमं हरिहरब्रह्मादयोऽपीश्वराः ।
सर्वज्ञा अपि यद्दयाविरहिता यान्ति क्षणान्मूकतां
प्रज्ञापारमितामितास्तु नितरां प्रज्ञाप्रसिद्ध्यै सताम् ॥९६॥

प्रज्ञा ॥८८॥

औदार्यशौर्यप्रथितान् सुरूपान् भूपांश्च दीव्यत्यनिवार्यचर्यः ।
स पुण्यभाक् कन्दुकवद्यदन्तः प्रज्ञा स्थितिं सन्दधती सतीयम् ॥९७॥

तारा ॥८९॥

कृत्वापि संजागरणं निशासु
यस्या निराधारतया स्थिताश्च ।
नाम्नैव साम्यं कथमप्यवापु-
स्तारा ममारादभियेऽस्तु तारा ॥९८॥

मधुमती ॥९०॥

किं वोर्ध्वतः किं परितो न्वधस्तात्
स्रवत्यदः सोममियं वतेति ।
न शक्यते वीरवरैर्विवेक्तुं
या रक्षतान्मां मधुमत्यपायात् ॥९९॥

मधुः ॥९१॥

यद्भक्तवाणी मधुमाधुरीणां जैत्री मनोदुर्मषकं श्रुतैव ।
अनन्यचेष्टं कुरुतेऽपि दुःखबध्यं बुधैः सा मधुरत्र जीयात् १००

१. जातावेकवचनम् ।

क्षीरार्णवसुधाहारा ॥९२॥

जरामरणसंहारासुरदुर्मोहकारणम् ।
क्षीरार्णवसुधाहारा विष्णुरूपास्तु मेऽरणम्[1] ॥१०१॥

कालिका ॥९३॥

ब्रह्माद्या अपि पश्च मुण्डविषया द्रष्टुं न शक्ता इवा-
धस्तादेव वहन्ति यद्गृहमहाकालाढ्यसिंहासनम् ।
यद्भक्तोऽपि विहाय कार्ष्ण्यमखिलं यादात्म्यमेत्यद्भुतं
ध्यानादेव ददातु साऽपरिमितं नित्यं बलं कालिका ॥१०२॥

सिंहवाहिनी ॥९४॥

अवलोक्यैव वृषं श्रितं पतिं स्वं
चपलं भ्रंशनभीतिदं कदाचित् ।
करुणाक्रान्तमना अनामरूपा
किन्नु[2] भूता पथि सिंहवाहिनी त्वम् ॥१०३॥

ओंकारा ॥९५॥

यन्मात्राभ्यो ज्ञानकर्मैकहेतुर्दुष्पारार्था सा चतुर्वेद्युदेति ।
यान्तर्नित्यं दन्ध्वनीतीह काचिदोङ्कारेयं योगिसाम्राज्यदास्तु १०४।

वसुधाकारा ॥९६॥

मूलाधारेऽस्ति वसुधाकारा या परदेवता ।
सेवे तां देवदेवेशीं स्वतन्त्रां मन्त्रमातरम् ॥१०५॥

---

१. शरणम् । २. क. ग. 'किल' पाठान्तरम् ।

चेतना ॥९७॥

यदावरणशक्तितो विविधवादबद्धादराः
सदापि च यदात्मका न विदुरात्मतन्त्र्यं बुधाः ।
तथापि न कथंचनापि पिहितास्ति या तैः सदा
स्वधामपरिचेतना हरतु चेतना सा भिदाम् ॥१०६॥

कोपनाकृतिः ॥९८॥

स्वभक्तोद्वेजकान् दुष्टानेव जाने प्रति स्वयम् ।
सदा सौम्यस्वभावापि जाता सा कोपनाकृतिः ॥१०७॥

अर्धबिन्दुधरा ॥९९॥

यदंशजातमप्येतन्महत्त्वख्यातमस्त्यहो ।
अर्धबिन्दुधरा सेयं मीयते केन धीमता ॥१०८॥

धारा ॥१००॥

निराधाराखिलाधारो धारा शक्तिर्भवत्वसौ ।
अपारावारसंसारसारोद्धारणकारणम् ॥१०९॥

श्रीकृष्णात्मपरानुभूतिविभवः श्रीकृष्णकौलः सुतं
साहिब्कौलमसूत यं च जननी बुद्धिः प्रबुद्धिः सती ।
तत्काव्ये कुलदेवताह्वयगतेः श्रीशारिकायाः स्तवं
मन्त्रोद्धारकमानते स्वसहजं भक्ती रसाङ्कागमत् ॥११०॥

इति श्रीमहामाहेश्वराचार्यवर्यसाहिबकौलानन्दनाथविरचिते
नामविलासे षष्ठी भक्तिः ॥ ६ ॥

## सप्तमी भक्तिः ।

विश्वमाता ॥१०१॥

अनन्यबीजनिक्षेपापेक्षं निर्माति या जगत् ।
विश्वमाता स्वयं भाता सतां चेतसि भासताम् ॥१॥

कलावती ॥१०२॥

कलयन्ती कलया स्वया त्रिदेवीं[1]
त्रिजगत् तत्कलयापि सत्रिभावम्[2] ।
सकलास्तत्र कलाश्च देशकाला-
कलिता कालगतिः कलावती नः ॥२॥

पद्मावती ॥१०३॥

पद्मेशपद्मोद्भवपद्मबन्धुमुखाश्च पत्पद्मरजोऽपि यस्याः ।
चिन्वन्त आशा न गताश्च पारं पद्मावती सा मम पद्मगा स्तात् ३॥

सुवस्त्रा ॥१०४॥

दिग्वस्त्रपीतवस्त्राद्यैरर्चितामुत्र चात्र च ।
अमत्रा[3] सा सुवस्त्रा मे देहवस्त्रात्मतां हर ॥४॥

---

१. ब्रह्मादित्रयाणां देवानां समाहारः । २. सह त्रित्रिभावेण सृष्टिस्थितिलयात्मकेन । ३. सहायः पात्रं च ।

प्रबुद्धा ॥१०५॥

या बोधिता सद्गुरुशासनेन प्रकाशयत्यात्मगतिं क्षणेन ।
जडाजडेष्वस्तविशिष्टभावा सा वाञ्छितं नो ददतां प्रबुद्धा ॥५॥

सरस्वती ॥१०६॥

उत्स्विन्नादौ निरुपमकला बीजबिन्दुत्वमाप्ता
रेखाश्लेषं सपदि दधती वर्णभावानुवर्ण्या ।
येदंभावं श्रयति नयति स्वं वपुर्विस्तरं सा
त्रेधाऽऽस्वाद्या वितरतु रसं स्वं सरस्वत्यशेषम् ॥६॥

कुण्डासना ॥१०७॥

जितत्रिधामा कृततन्निवेशा यच्छोभते दर्शनलोभहेतुः ।
सर्वत्र सर्वं परिकाशयन्ती कुण्डासनेति प्रथिता तदेषा ॥७॥

जगद्धात्री ॥१०८॥

आविर्भूय यतो यस्यां तिष्ठन्ति क्षणभङ्गुराः ।
अपि भावाश्चिरस्येव जगद्धात्री श्रियेऽस्तु सा ॥८॥

बुद्धमाता ॥१०९॥

निष्क्लेशपाशः शमिताखिलाशो यदाश्रितो बुद्धमना अनार्यैः ।
अनाश्रितां स्वात्मगतिं समेति सा बुद्धमाता हृदि भासतां नः ॥९॥

जिनेश्वरी ॥११०॥

इनासनं संगणयंस्तृणोपममाराधयन् यां विधूताजिनो जिनः ।
सार्वज्ञ्यमापद् विपदन्तकारणं जिनेश्वरी सा वृजिनं व्यपोहताम् १०

जिनमाता ॥१११॥

लीला किं वर्ण्यते तस्या जिनमातापि याहरत् ।
जिनस्य जननोद्भूतां भीतिं नीतिविचक्षणा ॥११॥

जिनेन्द्रा ॥११२॥

शान्तचित्ता दयावित्ता काषायाम्बरधारिणी ।
जिनेन्द्रास्तु श्रिये नित्यं निर्वैरा स्वैरचारिणी ॥१२॥

शारदा ॥११३॥

यदाप्तसिद्धिः सुजनो जिताधिः
ख्यातादिविद्यो विजहात्युपाधिम् ।
देहादिभावाधिगतं ददातु
सा शारदा पादतले निवासम् ॥१३॥

हंसवाहना ॥११४॥

अधिगत्य दयामजो यदीयां शिशुहंसाभिचरोऽपि चाग्रगामी ।
गजराजचरादिदेवतानां भवतीयं पथि हंसवाहनाख्यात् ॥१४॥

राज्यलक्ष्मीः ॥११५॥

न यैर्लोभः कदाचिच्च ध्यातस्ते वीक्ष्य यामपि ।
लुभ्यन्ति विवशाः सास्तु राज्यलक्ष्मीः सुराज्यदा ॥१५॥

वषट्कारा ॥११६॥

ध्यात्वा यां विधिना हुत्वा वह्निं सिद्धिमनुत्तमाम् ।
प्राप्नुवन्ति सदाधारो वषट्कारा ममास्तु सा ॥१६॥

---

१. इन्द्रादिदेवतानाम् ।

सुधाकारा ॥११७॥

यदश्वमेधयज्ञाद्यैर्दुष्करैः आप्तिसंशये ।
अमरत्वं चणात्तत् स्यात् सुधाकारानुचिन्तनात् ॥१७॥

सुधात्मिका ॥११८॥

मोहप्रहारिका पूर्णस्वात्मभावनकारिका ।
सुधात्मिका जयत्येषा विश्वतो विश्वधारिका ॥१८॥

राजनीतिः ॥११९॥

एकस्य सर्वतः सत्ता कथं स्यान्मर्त्यदेहिनः ।
तदा यदा न तुष्टा त्वं राजनीतिर्भवेः शिवे ॥१९॥

त्रयी ॥१२०॥

कार्येऽकार्येऽपि पटुघटनां स स्वयम्भूश्च यस्या
अर्थज्ञानात् समधिगतवान् सच्छ्रुताया मतायाः ।
यत्सज्ज्ञप्त्या विषमविषयाशीविषक्ष्वेडमूर्च्छा-
नाशोऽपि स्याद्धरतु दुरितं वाक्त्रयीशी त्रयीयम् ॥२०॥

वार्ता ॥१२१॥

यत्प्रसक्त्या श्रुतं वस्तु दृष्टवद् भाति याति च ।
यैकस्यापि सुदूरत्वं वार्ता सार्तिं हरत्वियम् ॥२१॥

दण्डनीतिः ॥१२२॥

अखण्डझषेण्डाज्ञतां खण्डयन्ती
पतिं तद्गतिं सर्वतो मण्डयन्ती ।

---

१. समुद्रः ।

तदाज्ञाकरं दण्डदं भण्डयन्ती[1]
शिवा दण्डनीतिर्भयं दण्डयन्ती ॥२२॥

क्रियावती ॥१२३॥

जीवत्वमासाद्य शिवोऽपि पुण्या-
पुण्याधिकारी भवति क्षणेन ।
यदाश्रयात् साभयदानदक्षा
क्रियावती नः श्रियमातनोतु ॥२३॥

सद्भूतिः ॥१२४॥

उपादानं[2] विना चित्रं स्वानन्दविभवं भवम्[3] ।
भावयन्ती स्वभावार्थकरी सद्भूतिरस्तु वः ॥२४॥

तारिणी ॥१२५॥

गम्भज्ञानमणिं विमोहमकरं रागोरगैर्दुस्तरं
तृष्णापेयचलज्जलं परिवलद्दुर्लोभकूर्माकुलम् ।
संसाराब्धिमिमं तरेत् सुविषमं साहाय्यहीनः कथं
दीनस्तद्यदि न त्वं[4]मातमकृपया संतारिणी तारिणी ॥२५॥

श्रद्धा ॥१२६॥

श्रद्धा[5] यदध्यास[6]विनाकृतस्य बद्धापि च स्वात्मभुवा न वाणी ।
तद्धाम संबोधयितुं समर्था श्रद्धा सदा सा ममदा[7] ममास्तु ॥२६॥

---

१. भडि शोधने । २. समवायिकारणम् । ३. संसारम् । ४. ख. ग. 'त्वमत्र' पाठः । ५. निश्चये । ६. आश्रयः । ७. ममत्वं द्यति खण्डयतीति ममदा ।

सद्गतिः ॥१२७॥

असत्यसंसारगताश्च नैवासतीं मतिं जातु समाश्रयन्ते ।
सन्तो भजन्तो भवतीं सतीं यत् संकीर्त्यसे सद्गतिरित्यतस्त्वम् २७॥

सत्परायणा ॥१२८॥

इतरामरसेवकाः पतन्ते सुयता अप्यवशास्त्वदीयभक्ताः ।
नतु जातु सदात्वदात्मका यत् परिगीता ह्यसि सत्परायणातः २८

सिन्धुः ॥१२९॥

धर्माब्धीन्दुः कर्मसीमादिबिन्दु-
ब्राह्मस्याब्धे[1] राज्यसन्धुत्वहेतुः ।
हेलालोकात् क्षारनीरादिबन्धुः
सिन्धुः कन्दु[2]र्दुष्कृतैधस्सु भूयात् ॥२९॥

मन्दाकिनी ॥१३०॥

गच्छन्ती मदमत्तचित्तविहगं पङ्गुं विधत्ते क्षणाद्
रिङ्खन्ती पुनरत्र रिङ्खणमुखं हन्त्युद्भवं लोलताम् ।
कल्लोलामलदोलिनी च सकलां दृष्टा सती या क्रमात्
सा वृन्दारकवन्दिता हरतु नो मन्दाकिनी मन्दताम् ॥३०॥

गङ्गा ॥१३१॥

यानङ्गारिशिरोवतंसकलिका ध्यातैव कामप्रदा
या वृद्धा[3]त्मजहस्तगा परिहरत्याचामिता वृद्धताम् ।

१. मानससरोवरस्य । २. 'तंदूर' इति भाषया । ३. ब्रह्मा ।

या कृष्णाङ्घ्रितलस्थितापि सुमतेः[1] कार्ष्ण्यापहा वीक्षिता
सा गङ्गापि[2] करोति चित्रममलं सर्वोपरिस्थं जनम् ॥३१॥

यमुना ॥१३२॥

यमनियमभृतो यतोऽपि भीता
यमभयमाशु[3] तदेव यद्विलोकात् ।
यमभयविशदं[4] स्वयं भवत्या-
मयदमनी यमुना यमत्वदा[5]स्तु ॥३२॥

सरस्वती ॥१३३॥

वनस्यावनदा दानादज्ञानवनपावकः ।
नीरभूरपि सा भोगरसदास्तु सरस्वती ॥३३॥

गोदावरी ॥१३४॥

गोदाता यत्तटे सद्यो गोप्रतिग्रहवान् भवेत् ।
गोदावरी जडत्वं नो बोधगोभिर्व्यपोहताम् ॥३४॥

विपाशा ॥१३५॥

पाशभृद्विषयो यापि भवपाशविनाशकृत् ।
यतस्ततस्ततोदौर्घा विपाशेति प्रकीर्तिता ॥३५॥

कावेरी ॥१३६॥

वीरा यत्तीरयातास्तरलतरतरङ्गालिवारिप्रवाहाद्
बिन्दून् नैवावहन्तं सततवहमुपाघ्राय मायाप्रवाहम् ।

---

१. पुरुषस्य । २. गं पातालं गच्छति । ३. सुखदुःखात्मकस्य द्वन्द्वस्य । ४. ख. ग. विषदस्वयं पाठः । ५. द्वित्वं द्यति खण्डयतीति एकत्वदेत्यर्थः । ६. ततं च तदुदकं, तस्य ओघः । ७. पवनम् ।

छायारूपं वहन्ति प्रततगतिगतं जातुचित् पातु माता (मातः)
कावेरी निम्नयाना क्षणहतिविभवान्निम्नहर्षोपयानात् ॥३६॥

शतद्रुका ॥१३७॥

एकद्रवप्रथां याति यदालोकात् क्षणं मनः ।
शतसद्भिः कथं गीता सा देवीह शतद्रुका ॥३७॥

सरयूः ॥१३८॥

हरत्वयोध्यालोकानां चित्रसद्गतिसाक्षिणी ।
सरयूर्मानसोद्भूता मानसोद्भूतविक्रियाम् ॥३८॥

चन्द्रभागा ॥१३९॥

अहो यदभ्याशगता नगत्वं
खगाः खगत्वं च नगा लभन्ते ।
रसानुरागा बत चन्द्रभागा
युष्मान् महाभागतया युनक्तु ॥३९॥

कौशिकी ॥१४०॥

यदमलजलभोगाद्योगिसाम्राज्यमाप्त्वा
कुशिककुलदिनेशो ब्रह्ममुख्यामरेशान् ।
अकृत नवभवत्वारम्भणाद् व्यग्रचित्तान्
वितरतु वरकोशं कौशिकी सुप्रकाशा ॥४०॥

गण्डकी ॥१४१॥

विष्णोरेकैकावतारोदरा यद्देवक्याद्या वर्णनं जात्वनन्तम् ।
संप्राप्तास्तन्नैकविष्णूदरा सा नित्यं वर्ण्या गण्डकी स्यात कथं नु ॥४१॥

शुचिः ॥१४२॥

शुचिरेव भवाभावभावाहारापि सर्वदा ।
रुचिराऽसुचिरादस्तु शुचिः स्वाकारणार्थकृत् ॥४२॥

नर्मदा ॥१४३॥

सोमोद्भवा सोमजिदम्बुपूरा
सोमेशकाम्या समसौम्ययाना ।
सदाभितो नो द्रढ्यत्वनन्ता
सा नर्मदा नर्मसु दक्षिणत्वम् ॥४३॥

कर्मनाशा ॥१४४॥

यत्प्राप्तये ते मुनयोऽप्यनन्तं
तेपुस्तपस्तन्नचिराद् यदीयात् ।
संदर्शनात् कर्मकृतोऽपि वा स्यान्-
नैष्कर्म्यमेषा किल कर्मनाशा ॥४४॥

चर्मण्वती ॥१४५॥

वर्मभूतास्ति या शर्मशस्त्रघाते सतां मता ।
चर्मण्वती सदा भूयाच्चर्मदृष्टिहरा तव ॥४५॥

देविका ॥१४६॥

अकालमरणच्छेदकारणं शरणं भव ।
ब्रह्मादिकाधिका देवी देविका देवविश्रुता ॥४६॥

---

१. भवस्य अभावाश्च भावाश्च, ते । २. अमृतम् । ३. सह उमया ईशेन (च) ।

वेत्रवती ॥१४७॥

नृप एकः कथं सर्वाधृष्यः[1] स्याद् द्वारगा न चेत् ।
त्रिवेत्रधारिभिर्गीता भवेद् वेत्रवती शिवा ॥४७॥

वितस्ता ॥१४८॥

कश्मीरभूमौलिरमर्त्यतातकीर्तिस्थली[2] धर्मसुतप्रजीवान् ।
संजीवयन्त्यद्भुतजीवनस्यै[3] ध्यानादपीयं सुखदा वितस्ता ॥४८॥

वरदा ॥१४९॥

सद्भक्तवरदाभक्तवरंदा[4] वरदाद्भुता ।
वरदेति कथं गीता वरधीभिर्वरेश्वरी ॥४९॥

नरवाहना ॥१५०॥

नरान् वहति या माता नरैर्या वोह्यते हृदा[5] ।
नरवाहनसंश्लाघ्या[6] श्रियेऽस्तु नरवाहना ॥५०॥

सती ॥१५१॥

असत्यदेहावतरं गतापि न सत्स्वरूपं विजहाति जातु ।
या वः सती सा शतशो ददातु सतीं मतिं केवलनिर्णयस्थाम् ॥५१॥

पतिव्रता ॥१५२॥

पतिव्रता त्वं वद निर्णयोऽस्ति वक्तुं न मे सर्वमयीश्वरेशि ।
पतिर्व्रतं तेऽस्ति किमु त्वमेव पत्युर्व्रतं सक्तहृदः सदेति ॥५२॥

---

१. अजय्यः । २. कश्यपस्य । ३. जलस्य । ४. सद्भक्तानां वरं ददाति, अभक्तानां वरं द्यति खण्डयति । वबयोरैक्ये, रलयोश्च ऐक्ये बलदा । ५. क. ग. 'हृदि' पाठः । ६. वैश्रवणेन ।

साध्वी ॥१५३॥

असाधूनपि साधुत्वं घातेनासाधुकर्मणा ।
प्रापयन्त्यसुरानेषा काचित् साध्वी मताद्भुता ॥५३॥

सुचक्षुः ॥१५४॥

सदा सुचक्षुरित्यस्या देव्याः स्वामग्रगो यतः ।
चक्षुराप्त्वा परं सर्वे तेन सच्चक्षुषः कृताः ॥५४॥

कुण्डवासिनी ॥१५५॥

याग्नीन्दुसूर्यकुण्डेषु वसन्त्यपि सतां हृदि ।
सोष्मत्वशान्तिं कुरुते काचित् सा कुण्डवासिनी ॥५५॥

एकचक्षुः ॥१५६॥

ईश्वरत्वं गतास्तेऽपि सहस्राष्टत्रिचक्षुषः[१] ।
यत्कृपायाः सैकचक्षुरैक्यचक्षुर्ददातु वः ॥५६॥

सहस्राक्षी ॥१५७॥

सहस्राक्षतया जिष्णुर्यदा लज्जामवाप्तवान् ।
तदा सापि सहस्राक्षी भूता किं भक्तवत्सला ॥५७॥

सुश्रोणिः ॥१५८॥

श्रोणीं यदीयामवलोक्य रम्भा स्वमार्दवाहंकृतिजं विहाय ।
ऊष्माणमाप्ता हिमतां तदादि सुश्रोणिरेषा हर योनिवासम् ॥५८॥

भगमालिनी ॥१५९॥

ऐश्वर्यधर्मयशसां कमलालया या
वैराग्यमोक्षविभवस्य च या विधात्री ।

---

१. इन्द्रब्रह्मत्रिलोचनादयः ।

भक्तस्य तद्विनिमयस्य च दुष्टबुद्धेः
सा दुर्भगत्वहतिकृद् भगमालिनी नः ॥५९॥

सेना ॥१६०॥

सेना येनाराधिताङ्गैश्चतुर्भिस्तस्येशस्य द्वारि तिष्ठन्ति सर्वे ।
सिद्धेरीशा भारतीशा मतेशा ज्ञानीशा वा मानवेशा धनीशाः ॥६०॥

श्रेणिः ॥१६१॥

श्रेणिः सन्निहिता देवी यत्र यत्र यदा यदा ।
तदा तदा स सर्वोऽपि सर्गः सर्गत्वभाग् भवेत् ॥६१॥

पताका ॥१६२॥

वाहिनी चतुरङ्गैश्च बहुरङ्गमयी भवेत् ।
यदग्रयानतो देवी पताकेयं श्रियेऽस्तु वः ॥६२॥

सुव्यूहा ॥१६३॥

सर्वाण्यङ्गानि हीनत्वं प्राप्नुयुः शत्रुसंनिधौ ।
वाहिनीनां यदा तुष्टा सुव्यूहा सा न युक्तितः ॥६३॥

युद्धकांक्षिणी ॥१६४॥

दुर्लभं मानवं देहं रणकीर्तीप्सया कथम् ।
त्यजेयुस्त्वं न चेन्मूर्च्छाकर्त्री सा युद्धकांक्षिणी ॥६४॥

पताकिनी ॥१६५॥

पतत्पतङ्गस्य गतिं द्युतिं च
रुणद्धि या ध्वस्तभया पतन्ती ।
स्थिता नगानां महतां पिधत्ते
स्थितिं हितायास्तु पताकिनी सा ॥६५॥

दयारम्भा ॥१६६॥

हरोऽपि भवभावैकप्रथां यातो यदाश्रयात् ।
सत्यं सैव दयारम्भा सम्भावितजगतत्त्रयी ॥६६॥

विपञ्चीपञ्चमप्रिया ॥१६७॥

श्रुतोदञ्चितमूर्धानस्तिर्यञ्चोऽपि च वञ्चिताः ।
कथं स्युः स्यान्न चेद्देवी विपञ्चीपञ्चमप्रिया ॥६७॥

परापरकलाकान्ता ॥१६८॥

न परापरतैकान्तं कर्तुं शक्याश्च यत्कलाः ।
परापरकलाकान्ता सा ममास्त्वग्रतः सदा ॥६८॥

त्रिशक्तिः ॥१६९॥

न मुक्तिभाजोऽपि न भक्तिभाजो
न भुक्तिभाजोऽपि बिरोचमानाः ।
भवन्ति संरक्तधियोऽपि तद्वद्
येषु त्रिशक्तिः किल सुप्रसन्ना ॥६९॥

मोक्षदायिनी ॥१७०॥

सकलं हि भवन्मयं भवत्या
नहि बन्धोऽस्ति कदापि तत् स को वा ।
इतरोऽस्ति विशेषभाग् न जाने
वत यस्येश्वरि ! मोक्षदायिनी त्वम् ॥७०॥

ऐन्द्री ॥१७१॥

जलप्रदानेन सुपोषयन्ती परं जनं भक्तजनं तु चित्रम् ।
जलत्वदूरीकरणेन भूयादैन्द्री गजेन्द्रोपरिगा श्रिये नः ॥७१॥

माहेश्वरी ॥१७२॥

उन्मत्तचेष्टः शवभूस्थितो यद् दिगम्बरः प्रेतपिशाचमित्रः ।
तथापि शूली परमेश्वरस्तन्माहेश्वरीसेवनजः प्रसादः ॥७२॥

ब्राह्मी ॥१७३॥

ब्रह्मरन्ध्रगता भक्तब्रह्मज्ञानोपदेशिनी ।
ब्राह्मी भूयात् सदा देवी ब्रह्मसृष्टयेकसाक्षिणी ॥७३॥

कौमारी ॥१७४॥

कुमारयन्ती संसारं कौमारादिदशाक्रमैः ।
कुमारहारिणी भूयात् कौमारी मारभीतिहृत् ॥७४॥

कुलवासिनी ॥१७५॥

सुकुलाकुलताभिमानहीनः
कुलमार्गाभिरतो यदीयभक्तः ।
कुलवित् कुलजां समेति सिद्धिं
शिवदा स्तात् कुलवासिनी सदा नः ॥७५॥

इच्छा ॥१७६॥

स्रष्टा सृजेत् किं नु कथं स विष्णू
रक्षेन्महेशोऽपि हरेन्न चेत् त्वम् ।

---

१. डलयोरैक्यम् । २. कौमारं हरति, तच्छीला ।

उन्मेषतद्व्यत्ययरूपकर्त्री
भवेः शिवे सर्वकलेश्वरीच्छा ॥७६॥

भगवती ॥१७७॥

स्वयमाशाम्बरोऽन्यस्मै किं दद्यात् स कपालभृत् ।
भिक्षुनाथो न चेद्देवी भवेद् भगवती गृहे ॥७७॥

शक्तिः ॥१७८॥

सूक्ष्मोऽव्यक्तः केवलो निर्गुणोऽपि
निःसम्भारश्चित्रसर्गं विधत्ते ।
शम्भुर्हर्षाघूर्णितो यत्प्रसत्त्या
शक्तिः सक्तिं संसृतौ संहरस्व ॥७८॥

कामधेनुः ॥१७९॥

त्वं कामधेनुः प्रथिता निकामं
कामं ददासीति च सुप्रसिद्धिः ।
सार्था तदा स्याद् यदि मे स्वमेव
दद्या यतः सर्वसुकामसिद्धिः ॥७९॥

कृपावती ॥१८०॥

मारणेनासुराणां या सुराणां तारणेन च ।
कृपां विधत्ते सा कापि कीर्तितैषा कृपावती ॥८०॥

---

१. निमेषः । २. सर्वाः कला यस्याः, सर्वान् कलयति, सर्वं संसारं कलयति ।

वज्रायुधा ॥१८१॥

यस्याः प्रीतिवशादस्थि दधीचेः सर्वसारताम् ।
अगच्छत् प्रथितामस्तु सेयं वज्रायुधा श्रिये ॥८१॥

वज्रहस्ता ॥१८२॥

भक्तानां कुसुमं वज्रं वज्रं कुसुममद्भुतम् ।
अभक्तानां परं यस्या वज्रहस्ता जयत्यसौ ॥८२॥

चण्डी ॥१८३॥

गत्यालसा घूर्णितनेत्रपद्मा
वाण्या स्वभक्तोष्महरापि सौम्या ।
जाने दुरज्ञानविनाशनेन
चण्डीति गीता सुभगा भवानी ॥८३॥

चण्डपराक्रमा ॥१८४॥

दण्डादण्डिहताखिलाभ्रनिपतत्तारानुकीर्णा पुरा
संख्ये दैत्यवरै रराज कुसुमाकीर्णेव सीमन्तिनी ।
या दृष्ट्वा स्वयमेव यां परिगता मोहं पुनस्ते कृत-
स्वार्था चण्डपराक्रमा जयति सा यत्नं विना देवता ॥८४॥

गौरी ॥१८५॥

नीराजितपदद्वन्द्वा गौरीशेन्द्रादिमौलिभिः ।
भूयाद्गौरी गुरुत्वाप्त्यै स्वतः प्रथितगौरवा ॥८५॥

सुवर्णवर्णा ॥१८६॥

सुवर्णतां यातमदः सुवर्णं जगत्यतो यत्परिलब्धवर्णैः[1] ।
अवर्ण्यवर्णापि सुवर्णवर्णेत्याह्वानगीता कृतरूपवर्णम् ॥८६॥

स्थितिसंहारकारिणी ॥१८७॥

एकदा स्थितिकर्तैकः संहरेतापरोऽन्यदा ।
युगपत् तु स्वतन्त्रेयं स्थितिसंहारकारिणी ॥८७॥

एका ॥१८८॥

मिथोऽतिरक्तौ यदि काँचनैक्यं
गताविव स्तो न हि तौ च वर्ण्यौ ।
इयं तु सर्वत्र सदैव चैका
स्वयं कथं स्यात् परिवर्णनीया ॥८८॥

अनेका ॥१८९॥

सृजेद् विधाता किमिदं च किं स्याद्
वेदा वदेयुश्च किमत्र चित्रम् ।
न चेत् स्वतन्त्रा विमला चिदेका-
नेका भवेत् कापि विलासभूमिः ॥८९॥

महेज्या ॥१९०॥

भावयोगतपःकर्मज्ञानेज्यानां महेश्वरी ।
प्रसूतिवसुधा देवी महेज्येयं दहत्वघम् ॥९०॥

---

१. विचक्षणैः ।

शतबाहुः ॥१९१॥

रक्षायै सर्वभक्तानां शतबाहुर्महेश्वरी ।
नैकबाहुर्नैकबाहुर्व्यक्ताव्यक्ता जयत्यसौ ॥९१॥

महाभुजा ॥१९२॥

चर्मावर्त्तमसृग्जलं परिवलद्बाणादिमत्स्याकुलं
दन्त्यश्वादिविचित्रसत्त्वमभितो वस्त्रोरगेन्द्रैर्वृतम् ।
सेनाब्धिं यदरं ततार स महाबाहुः कुरूणां नरं-
स्तत् सत्येन महाभुजाभजनजः सम्यक् प्रसादोदयः ॥९२॥

भुजङ्गभूषणा ॥१९३॥

कटौ कण्ठे शिरस्येषा हर भौजङ्गमं भयम् ।
भुजङ्गभूषणा शम्भुभुजङ्गमविभूषणाम् ॥९३॥

भूषा ॥१९४॥

या कामिनीनां कमलाननानामङ्गेष्वभङ्गं विदधाति कश्चित् ।
काम्यं निकामं परभागमेषा भूषा दृशा पोषणकृत्सदा स्तात् ॥९४॥

षट्चक्रक्रमवासिनी ॥१९५॥

या विघ्नेशजनेशकेशवहरात्माध्यात्मसद्देशिकैः
स्वस्वे धामनि कामनीयविभवा संसेव्यते स्तूयते ।
एका सर्वगता गतागतकथाहीनात्मलीना परा
षट्चक्रक्रमवासिनी निवसतान्मन्मानसे स्वत्विषा ॥९५॥

---

१. अर्जुनः । २. नायकः । ३. अविनाशम् । ४. ब्रह्मा ।
५. 'सन्मानसे' इति क. पाठः ।

षट्चक्रभेदिनी ॥१९६॥

ऊर्ध्वाम्नायकलादक्षैर्ज्ञेया षट्चक्रभेदिनी ।
भेदबुद्धिहरीं सिद्धिं ददात्वस्मै विना हठम् ॥९६॥

श्यामा ॥१९७॥

सुधास्वादोन्मादागणितवनिताभावकलया
लयारम्भं रम्भारुचिरजघना या विदधती ।
महाकाली रात्रिर्भ्रमणरमणीव द्युतिमती
भवत्येषा श्यामा भवतु भवदुर्भावहतिकृत् ॥९७॥

कायस्था ॥१९८॥

माया मा[1]या ज्ञानगाया विपक्षः
प्रायः कायस्तल्लयो दुर्लयोऽयम् ।
कायस्थापि स्वेन सेयं न माया-
मेया चित्रं चेतना सुस्वतन्त्रा ॥९८॥

कायवर्जिता ॥१९९॥

अपि ब्रह्माण्डपिण्डेभ्यो वितता प्रथिता मता ।
सतां भूयाद् विभूत्यै सा भवानी कायवर्जिता ॥९९॥

सुस्मिता ॥२००॥

स्मितेन या विस्मितमातनोति
दृष्टैव गम्या नहि दृष्टिवादैः ।
भक्तस्य रक्तस्य विरक्ततायां
सा सुस्मिता तेऽस्तु हिताय शक्तिः ॥१००॥

---

१. लक्ष्म्याः ।

श्रीकृष्णात्मपरानुभूतिविभवः श्रीकृष्णकौलः सुतं
साहिब्कौलमसूत यं च जननी बुद्धिः प्रबुद्धिः सती ।
तत्काव्ये गुरुवृत्तचिन्तनमणेः सोदर्यभावं श्रिते
देवीनामविलासनाम्नि विरतिं भक्तिर्गता सप्तमी ॥१०१॥

इति श्रीमहामाहेश्वराचार्यवर्यसाहिबकौलानन्दनाथ-
विरचिते नामविलासे सप्तमी भक्तिः ॥७॥

# अष्टमी भक्तिः

सुमुखी ॥२०१॥

न सूर्यचन्द्रौ नच पद्मवल्ली यातौ यदीयाननतुल्यतां यत् ।
सुशब्दपूर्वत्वमतः सुदृब्धं यस्या मुखे स्तात् सुमुखी सदा नः ॥१॥

क्षामा ॥२०२॥

सदा भवभवाभावभावाहारापि काप्यहो[1] ।
क्षामा सा मा परेशानी विषमे विषयेऽवतु ॥२॥

मूलप्रकृतिः ॥२०३॥

यस्या उदयमायान्ति लयं यस्यां च यन्मयाः ।
भावाः कापिलवेद्येयं[2] मूलप्रकृतिरद्भुता ॥३॥

ईश्वरी ॥२०४॥

इच्छानिच्छाव्यत्ययेच्छाभिरेतत्
सत्तासत्ते व्यत्ययेनापि सत्ताम् ।
धत्ते यस्या निर्मलाया दयाया
एषा देवी कीर्तिता सेश्वरीति ॥४॥

---

१. भवात् संसारात् भवा उत्पन्ना ये अभावा भावाश्च, तानाहरति । २. कपिलशास्त्रज्ञैर्ज्ञेया ।

अजा ॥२०५॥

जाते घटे संस्थितमन्तरभ्रं न जायते जातमिवापि यद्वत् ।
जातस्य तद्वद् बहिरन्तरस्य[1] स्थितापि देवी प्रथितास्यजा त्वम् ॥५॥

बहुवर्णा ॥२०६॥

एकवर्णापि निर्वर्णा बहुवर्णेति या शिवा ।
सुस्वतन्त्रा सुवर्णं[2] नो बहुवर्ण्यं[3] ददातु सा ॥६॥

पुरुषार्थप्रवर्तिनी ॥२०७॥

द्विविधं पौरुषं देवी स्वस्वाभीष्टं ददाति या ।
भक्तस्य सा सदाग्रेऽस्तु पुरुषार्थप्रवर्तिनी ॥७॥

रक्ता ॥२०८॥

भक्ता यस्या अन्यतः स्युर्विरक्ता
रक्ता ध्याने कालभीतिं विहातुम् ।
शक्तास्त्यक्ताशेषदोषाः परैषा
रक्ता देवी रक्तभावप्रतिष्ठा ॥८॥

नीला ॥२०९॥

अभ्रे जलाभ्रे जलधौ द्रुमेषु सुस्पष्टपत्रेष्वसितोत्पलेषु ।
रक्तेषु या मुख्यतया विभाति नीलेषु नीलाऽस्तु हिताय देवी ॥९॥

सिता ॥२१०॥

हिमे हिमांशावमरापगायां कान्तेऽभ्रमोरिन्द्रहये[4] विभूतौ ।
हरस्य मुक्तादिषु च प्रधाना सिता सितं स्वान्तमियं करोतु ॥१०॥

---

१. संसारस्य । २. शोभनं यशः । ३. वर्णनीयम् । ४. ऐरावते ।

श्यामा ॥२११॥

श्यामापाङ्गा भ्रामयामास रामाः
श्यामः[1] श्यामा[2] गोपजन्मा नकामः[3] ।
यस्यां स्वस्यावेशमात्राद् दयाप्ता—
च्छ्यामा सा मारामकामं करोतु ॥११॥

कृष्णा ॥२१२॥

तारासु लोलासु वराङ्गनानां रात्रौ मतौ मूढमतेः प्रधाना ।
कृष्णापि कृष्णत्वहरा वितृष्णा कृष्णत्वदा भक्तवराय भूयात् १२॥

पीता ॥२१३॥

पीता पीतैकपर्देन[4] दृष्ट्या पीताम्बरेण[5] च ।
गीता पीता हितायास्तु माता भाता सतां हृदि ॥१३॥

कर्बुरा ॥२१४॥

कर्बुरे ब्रह्मरन्ध्रस्थे शीभिनी[6] कमलासने ।
कर्बुरा देवता भूयाद् भवभारापहारिणी ॥१४॥

क्षुधा ॥२१५॥

धात्रादयोऽपि यां नैव रोद्धुं शेकुः सुधाशनाः ।
क्षुधा देवी जयत्येषा सर्वधात्वेकबीजभूः ॥१५॥

तृष्णा ॥२१६॥

कुम्भोद्भवो मुनिर्वह्निर्वडवावक्त्रलाञ्छितः ।
यन्नुन्नोऽब्धिविशोषैकहेतुस्तृष्णा जयत्यसौ ॥१६॥

---

१. श्रीकृष्णः। २. गोपीः । ३. नञ्समासो नप्रद्युम्न इतिवत्। ४. महादेवेन। ५. विष्णुना। ६. क. ख. 'शोभिनी' पाठः।

जरावृद्धा ॥२१७॥

विपाशनोऽपि यत्सङ्गादजरामरताधिपः ।
चित्रं सापि जरावृद्धा क्रियान्मम जराजराम् ॥१७॥

तरुणी ॥२१८॥

रतौ रक्तचित्तोऽङ्गहीनः कदाचिद्
भवद्बन्धुरस्त्री[1] च पुष्पैः स विश्वम् ।
स्मरो यज्जयत्येतदस्याः स दृष्ट्या
तरुण्याः परं हास्यमात्रप्रसादः ॥१८॥

करुणालया ॥२१९॥

कपालिनं हरं[2] भीममपि प्रेतगणावृतम् ।
दूरीकरोषि यन्मातो गीयसे करुणालया ॥१९॥

कला ॥२२०॥

कलाम्[3]एकां यदा ध्यायेत् कलेत्येनां मलापहाम् ।
सकला न वशे किं स्युः करमालातुलाः कलाः ॥२०॥

काष्ठा ॥२२१॥

दुष्टत्वं यन्न नष्टं स्यात् कष्टेन बहुनापि तत् ।
नश्येत् क्षणेन भक्तानां काष्ठेत्यस्याः प्रसादतः ॥२१॥

मुहूर्ता ॥२२२॥

या विभज्य दिने रात्रौ पृथक् षोडशधा स्थिता ।
स्वरूपं प्रथिता भूमौ मुहूर्तास्तु शिवाय वः ॥२२॥

---

१. ख. ग. 'बन्धुः' पाठः । २. चौरं, हरतीति व्युत्पत्तेः ।
३. कियन्तं कालम् ।

निमेषा ॥२२३॥

या भूलोकाद्विविषया शोभते द्योमदानकृत् ।
निमेषास्तु परेशानी विशेषाशेषभूतिदा ॥२३॥

कालरूपिणी ॥२२४॥

विदुषी प्रभवादिभिर्भवं या प्रभवादीन् नहि कोऽपि वेत्ति यस्याः ।
ग्रहराशिभचक्रकानुमेया प्रथिता सा किल कालरूपिणीति ॥२४॥

सुकर्णरसना ॥२२५॥

विज्ञप्तिं सुरसं सम्यग् ग्रहीतुं सुजनार्पितम् ।
सुकर्णरसना भूता देवी सापि निरञ्जना ॥२५॥

नासा ॥२२६॥

या कामिनीभ्यः सुषमां ददाति मुक्तादिरत्नोल्लसिताऽऽददाति ।
आमोदसंघं सकलस्य यापि नासेति सा काप्यनुमीयतेऽत्र ॥२६॥

चक्षुः ॥२२७॥

यच्चक्षुर्विषयप्राप्तं शक्तो द्रष्टुं न सोऽन्तकः ।
प्रीतेरेकनिदानं सा चक्षुरित्यभिधीयते ॥२७॥

स्पर्शवती ॥२२८॥

यत्पादरजसा स्पृष्टं भाले स्पृशति जातु न ।
माया कापि कदाप्येषा सती स्पर्शवती मता ॥२८॥

---

१. दानं=खण्डनम् । २. सृष्टिस्थितिसंहारान् [ प्रभवविभवादीन् वत्सरानपि ] । ३. ख. ग. 'सुवर्ण' पाठः । ४. ख. ग. 'सुवर्ण' पाठः । ५. परमा शोभा । ६. संसारस्य ।

रसा ॥२२९॥

या षड्विधाष्टादशतां विगाहते
भीमेन सम्यग्रसितानलेन वा ।
योगीश्वरै[1]र्यामृतरूपिणीच्चिता
पूर्णं रसं सा रसयेद्रसा जनम् ॥२९॥

गन्धप्रिया ॥२३०॥

नासिका जडरूपापि गन्धं चेतयतेऽभितः ।
यत्प्रसत्त्या सुगन्धं सा देयाद् गन्धप्रिया यशः ॥३०॥

सुगन्धा ॥२३१॥

नानागन्धाष्टगन्धत्वप्रथिता गन्धवर्जिता ।
सुगन्धास्तु भवोद्भूते मायादुर्गन्धहारिका ॥३१॥

सुस्पर्शा ॥२३२॥

संसिद्धपस्पर्[2]शो भक्तः पश्यति स्पर्[3]शवद् भवम् ।
यत्पादरेणुसंस्पर्शात् सुस्पर्शास्तु शिवाय वः ॥३२॥

मनोगतिः ॥२३३॥

रोद्धुं यां नैव शेकुर्विविधविधिकथायोगसेवादियत्नैः
खिन्ना नुन्नाः स्वबुद्ध्या ययुरथ शरणं यद्गतिज्ञानलब्ध्यै ।
यामेवेशा अजाद्या अपि विमलमनोभावमाप्ता मनोग-
त्याख्या देवी सदा मे मनसि निवसताद् वासरश्रीरिवार्के ॥३३॥

---

१. ख. ग. 'योगेश्वरैः' पाठः । २. प्रयोजनम् । ३. चारवत् ।

मृगनाभिः ॥२३४॥

जातो यतः सर्वसुगन्धजेता कस्तूरिकामोदवरोऽखिलस्य[1] ।
घ्राणैकमार्गं विदधाति चेतः प्रकीर्त्यते सा मृगनाभिरार्यैः ॥३४॥

मृगाक्षी ॥२३५॥

चलेनार्धविलोकेन या चलं कुरुते मनः ।
सेयं कापि मृगाक्षी नो भूयादक्ष्यग्रगा सदा ॥३५॥

कर्पूरामोदधारिणी ॥२३६॥

यद्वासनामुपाघ्राय वासना मलिना क्षणात् ।
विनश्यति शिवायास्तु कर्पूरामोदधारिणी ॥३६॥

पद्मयोनिः ॥२३७॥

ननायोनिरयोनिश्च पद्मयोनिरितीरिता ।
योनिप्रवेशदुर्वेशमुखं दुःखं व्यपोहताम् ॥३७॥

सुकेशी ॥२३८॥

सुकेशोपमानं[2] यदि स्यादनन्तै-
र्गुणैः शोभितं वर्णको[3] वाप्यनन्तः ।
अनन्ताढ्यजिह्वस्तदा स्युः सुवर्ण्याः
सुकेशीमहेशीकचत्सत्कचेशाः ॥३८॥

सुलिङ्गा ॥२३९॥

स्वैश्वर्यरूपं निखिलं प्रपञ्चं
शम्भोः स्फुटीकर्तुमजादिशक्तिः ।

---

१. संसारस्य । २. चामरादिकम् । ३. वर्णयिता ।

उज्जृम्भिता काचन या प्रसिद्धा
गुप्ता सहायीभवतात् सुलिङ्गा ॥३९॥

भगरूपिणी ॥२४०॥

यैकाप्यनेकाङ्गमिदं विधातुं
पातुं क्षमा हन्तुमपि स्वभावात् ।
काचित् सदानन्दकृदस्तु वीरै-
र्धीरैर्निषेव्या भगरूपिणी सा ॥४०॥

योनिमुद्रा ॥२४१॥

याऽऽधारदारिद्र्यमपि प्रयातं
बीजं च बिन्दुं च दधाति सम्यक् ।
सुखेन गम्या कुलमार्गनिष्ठैः
सा योनिमुद्रास्तु मुदे सुदेहा ॥४१॥

महामुद्रा ॥२४२॥

दशभिः[1] षोडशाधारैर्द्वादशान्ते लयं गतैः ।
ऐक्यहेतुर्द्वयोर्[2] गीता महामुद्रा महेश्वरैः ॥४२॥

खेचरी ॥२४३॥

लब्ध्वा यां सत्यसन्धाः[3] परगुरुदयया सृष्टिबीजैकचित्ता
वामं कामं निकामं प्रशमयितुमलंभूष्णवः स्युर्वितृष्णाः ।
तं वा कालं करालं गतविषयरसाः सद्रसज्ञा मुनीन्द्राः
सञ्चारं खेचरीयं वितरतु रुचिरं खेऽचिरं चिन्मये नः ॥४३॥

---

१. इन्द्रियैः । २. जीवात्मपरमात्मनोः । ३. सत्यप्रतिज्ञाः ।

खगगामिनी ॥२४४॥

ग्रधिहीनरथोऽनूरुसारथिर्यत्प्रसादतः ।
खगो नित्यमविश्रान्तो भानुः सा खगगामिनी ॥४४॥

मधुश्रीः ॥२४५॥

नगाः कुसुमवर्षणैः सततगाश्च संवीजनैः[1]
खगाः कलरवस्तवैर्विमलवारिभिर्निम्नगाः ।
निषेव्य वत सन्ति यां सकलकामनीयागमाः
सदा भवतु देवता मम मता मधुश्रीः श्रिये ॥४५॥

माधवीवल्ली ॥२४६॥

परत्र भ्रमरं[2] फुल्ला भ्रमरं न करोति या ।
करोतु माधवीवल्ली निर्भ्रमं मम मानसम् ॥४६॥

मधुमत्ता ॥२४७॥

यार्धविलोकनभाषणयानैर्लज्ञितविभ्रममात्मनि भक्तम् ।
पूर्णविलोकनभाषणयानं संरचयत्युदिता मधुमत्ता ॥४७॥

मदोद्धता ॥२४८॥

कुली च वित्ती च सुरूपचर्यो दाता प्रभुः शास्त्रविदस्त्रविद्वा ।
मदोद्धतो जातु न यत्सुभक्तो मदोद्धता चित्रमियं श्रिये स्तात् ॥४८॥

मातङ्गी ॥२४९॥

मातङ्गानां सेविता दुष्कलङ्कं पातङ्गं या भावमापादयन्ती ।
आतङ्कं वाऽशङ्कमात्मप्रदीपे मातङ्गीयं मत्तमातङ्गयाना ॥४९॥

---

१. वायवः । २. भ्रमणशीलम् ।

शुकहस्ता ॥२५०॥

भवभावविरक्तभावभक्त्या परितुष्टा मुनिजस्य या शुकस्य ।
समनामहितत्वकृत्तु भूता शुकहस्ता सुखकृन्न वाशु कस्य ॥५०॥

पुष्पबाणा ॥२५१॥

पुष्पबाणापि या चक्रपाणिबाणमजीजयत् ।
बाणक्षेपं विनैवाशु दृष्ट्या रुद्रं श्रियेऽस्तु सा ॥५१॥

इक्षुचापिनी ॥२५२॥

पिनाकशार्ङ्गचापाभ्यां स्तुता देवीक्षुचापिनी ।
दिक्षु दिक्षु सदा रक्षाकारिणी नो विहारिणी ॥५२॥

रक्ताम्बरधरा ॥२५३॥

रक्ताम्बरधरेत्यस्या ध्यानं रक्ता अहर्निशम् ।
जानन्ति सर्वतः संध्यामिव दैवतपूजिताम् ॥५३॥

क्षीवा ॥२५४॥

अन्यः कश्चित् क्षीवभावं कदाचिद्यातः सद्यश्चेत्यहीनः स्वयं स्यात् ।
क्षीवा त्वेषा स्वात्मना सर्वदाहो जीवं क्षीवं चेत्यलुब्धं करोति ॥५४॥

रक्तपुष्पावतंसिनी ॥२५५॥

चन्द्रं कलङ्किनं मत्वा निरङ्कं च शिरोगतम् ।
हरस्य जाने सा भूता रक्तपुष्पावतंसिनी ॥५५॥

शुभ्राम्बरधरा ॥२५६॥

शुभ्राङ्गेन समं शुभ्रशैले खेलति या मुदा ।
शुभ्राम्बरधरा सेयं शुभ्रं वितरताद्यशः ॥५६॥

---

१ भवस्य संसारस्य भावाः । २ महादेवेन ।

धीरा ॥२५७॥

स्वयं च भीमस्य भयानकानां गणैर्गणानां च वृतस्य सर्पैः ।
सदाज्ञयातापि हरस्य पूर्णानन्दैव धीरास्तु निजार्थकर्त्री[1] ॥५७॥

महाश्वेता ॥२५८॥

कदाचिल्लीलायै निजसदसि शर्वेण सहसा
महाश्वेते शैले स्थगयितुमलं स्वं सुचतुरा ।
महाश्वेता भूता कथमपि न लक्ष्या सुहसिता-
वतान्माता भाताऽसितमितहितात् संस्तुतिकृतात् ॥५८॥

वसुप्रिया ॥२५९॥

अन्यः कदाचिद्दौर्गत्यशङ्कया स्याद् वसुप्रियः ।
भगवत्यपि नो जाने कथं देवी वसुप्रिया ॥५९॥

सुवेणिः ॥२६०॥

अर्धाङ्गगाया गिरिशस्य गङ्गा शिरोगता भाति समेत्य यस्याः ।
वेण्येव वेणीविषयं प्रयाता सुवेणिरेषास्तु सदा हिताय ॥६०॥

पद्महस्ता ॥२६१॥

एकेन पादेन जले स्थिताय तुष्टया रवेरुन्मुखतां गताय ।
दत्तो वरः कर्दमजाय पद्महस्तेतिनाम्नैव तया धृतेन ॥६१॥

मुक्ताहारविभूषणा ॥२६२॥

यन्मुक्ताहारशोभाभिर्गङ्गेव हसिता चला ।
उत्फेना चास्ति सा देवी मुक्ताहारविभूषणा ॥६२॥

---

१. धीरत्वकर्त्री ।

कर्पूरामोदनिःश्वासा ॥२६३॥

भ्रमरोऽपि सदा दिक्षु सक्तो यत्रास्ति शङ्करः।
कर्पूरामोदनिःश्वासा सेयं श्वसनपूजिता[1] ॥६३॥

पद्मिनी ॥२६४॥

अन्यदा रविरुदेत्ययं चिराद्यद्विकाससमये चिरेण वा।
संदिदृक्षुरिव मन्दमन्दगः पद्मिनीति गदिता बुधैरियम् ॥६४॥

पद्ममन्दिरा ॥२६५॥

यत्कलानिधिरिहाङ्कवान् गदी तापकृद् दिनमणिश्च भास्करः।
तत्त्ववैमि किल पद्ममन्दिरादृष्टिदृष्टिजनिता[2] विभक्तता ॥६५॥

खड्गिनी ॥२६६॥

यद्धस्तयातं समवेक्ष्य खड्गं दैत्याः स्वमस्मिन् प्रतिबिम्बितं वा।
पलायितास्तेऽपि भियेव मृत्युं सा खड्गिनीति प्रथिता त्रिलोक्याम् ॥

चक्रहस्ता ॥२६७॥

गोपालबालोऽपि च भूमिपाला-
नेकोऽप्यनेकान् विदिताखिलास्त्रान्।
हन्यात् कथं यत्नविहीन एषा
न स्यात् प्रसन्ना यदि चक्रहस्ता ॥६७॥

भुसुण्डी ॥२६८॥

भुसुण्डकाकः सदयो[3] यदीयां
दयां समालम्ब्य विलम्बिताशः।

---

१. वायुना। २. पद्ममन्दिरायाः अदृष्टिश्च दृष्टिश्च, ताभ्यां जनिता। ३. सन् अयः शुभावहो विधिः, सह दयया वर्तते च।

ब्रह्माण्डनाशेऽपि न नाशभागी
चिद्भुशुण्डिमेषा ददतां भुसुण्डी ॥६८॥

परिघायुधा ॥२६९॥

या तुष्टा स्वात्मसद्रत्नकोशेऽस्मिन् मोचयत्यरम् ।
विमोहपरिघं सेयं कीर्तिता परिघायुधा ॥६९॥

चापिनी ॥२७०॥

या बाणवर्षैः परैमावृणोति
यां पुष्पवर्षैश्च हरिः कृतार्थः ।
सा चापिनी कापि विलापमस्य
कृपाकरी मोहकृतं विलुम्प ॥७०॥

पाशहस्ता ॥२७१॥

जडाधिपोऽपि प्रथितः प्रचेता नियामयत्युद्धसतत्त्वसङ्घम् ।
दयां यदीयां परिलभ्य देयात् सा पाशहस्ता भवपाशनाशम् ॥७१॥

त्रिशूलवरधारिणी ॥२७२॥

कालभीहारिणी देवी प्रेतभूमिविहारिणी ।
श्रीकारिणी जनस्यास्तु त्रिशूलवरधारिणी ॥७२॥

सुबाणा ॥२७३॥

यकं बाणं दर्शयन्ती क्षिपन्ती लक्ष्यीभूतं तं पुनस्ताडयन्ती ।
तेनासंख्यीभूतरूपेण दैत्यान् देवप्रीत्यै सा सुबाणेति गीता ॥७३॥

---

१. स्वीकारम् । २. शत्रुम् ।

शक्तिहस्ता ॥२७४॥

कुमारोऽपि[1] यां तोषयित्वा कुमारीं
कुमारं[2] जघानासुरं तारकं तम् ।
त्रिशक्तिप्रसक्तं च काचिच्चिदेषा
शिवायास्तु शक्तिः शिवा शक्तिहस्ता ॥७४॥

मयूरवरवाहना ॥२७५॥

प्रियेप्रियेतिवाक्तुष्टा[3] शिखिने पारितोषिकम् ।
ददाविव स्वयं भूत्वा मयूरवरवाहना ॥७५॥

वरायुधधरा ॥२७६॥

मोहप्रहारसंहारहरा देवी परापरा ।
वरायुधधरा सेयं गीयते वरबुद्धिभिः ॥७६॥

वीरा ॥२७७॥

ध्यायन्तो यां धीरवीरा व्यथन्ते
नादातुं वा दातुमस्त्राणि जातु ।
कीर्तिं मूर्तिं देवतानां क्षितिं वा
लब्धुं तुष्टाः सा शिवायास्तु वीरा ॥७७॥

वीरपानमदोत्कटा ॥२७८॥

गुप्तप्रकटसंघट्टा नभसीव घनच्छटा ।
पातात् कटाक्षपातेन वीरपानमदोत्कटा ॥७८॥

---

१. बालोऽपि । २. कुत्सितो मारोऽभिलाषो यस्य । ३. पीयौ पीयौ इति शब्दानुकृतिः ।

वसुधा ॥२७९॥

विराजते राजसमाजभाजां भूत्वा सुराजः कृपयेह[1] यस्याः ।
उद्दामसुद्धाम सदा ममास्तु सुधोत्तमा सा वसुधा सुपाला ॥७९॥

वसुधारा ॥२८०॥

दारवराः कुचरोचितहारा ऊरुभरालसलास्यविहाराः ।
तस्य वशा न कथं स्युरुदारा यस्य करे वत सा वसुधारा ॥८०॥

जया ॥२८१॥

रणे वने वा गहने जनानां राजावलोके वरमङ्गलेषु ।
यन्नामवक्त्रं प्रतिभाति वक्त्रं जया दयाब्धिर्विजयाय भूयात् ॥८१॥

शाकम्भरी ॥२८२॥

खेचरी गोचरी स्वेच्छागोचरी वरसुन्दरी ।
शाकम्भरी सदा भूयाद् वरदा परमेश्वरी ॥८२॥

शिवा ॥२८३॥

उदेति यस्या विलयं च याति यस्यां च यद्रूपमिदं सदूर्मि ।
तथापि या वर्त्तत ऊर्मिहीना[2] शिवा शिवायास्तु नवा नवेयम् ॥८३॥

विजया ॥२८४॥

ध्येया चतुर्वर्णजनैः क्रमेण सितादिवर्णोत्तमपुष्परूपैः ।
विधुः परानन्दसुधाम्बुराशेरयप्रदा स्ताद् विजयाभयस्था ॥८४॥

---

१. क. 'कृपयेव' पाठः । २. शीतातपशोकमोहक्षुत्पिपासादि-रहिता ।

जयन्ती ॥२८५॥

भक्तो यदीयो जनमध्यवर्ती विभाति तारान्तरगो यथेन्दुः ।
विपक्षयूथान्धनिशानिहन्ता सतां जयन्ती जयदा सदास्तु ॥८५॥

सुस्तनी ॥२८६॥

पूर्वं स्वकुम्भद्युतिमानमत्ताः कुचौ यदीयाववलोक्य पश्चात् ।
नागास्तदाघातमशिरःसु धूलिं क्षिपन्ति सैषा किल सुस्तनीति ॥८६॥

शत्रुनाशिनी ॥२८७॥

शत्रवो न स्युरेतस्य द्विष्टाश्चेत् स्युस्तदापि ते ।
मित्रतां यान्ति येनेयं पूजिता शत्रुनाशिनी ॥८७॥

अन्तर्वल्ली ॥२८८॥

बहिष्कृतं चापि ययेदमात्मस्वरूपतो भाति तदन्तरेव ।
विमर्शनेनात्मनि चिन्मयेऽन्तर्वल्ली शिवेयं मतिमद्भिरीड्या ॥८८॥

वेदशक्तिः ॥२८९॥

वाचं स्वकीयां गदितां जनोऽयं
जानाति सा तं नहि जातु यद्वत् ।
तथैव या वेदविदस्ति वेद-
वेद्या न वा सावतु वेदशक्तिः ॥८९॥

वरदा ॥२९०॥

अमरा इतरे वरदाः करगाभिनयेन हि सन्ति सहस्रतया ।
वरदा त्वियमेव सदा प्रथिता चरणौ शरणौ श्रयतां दयया ॥९०॥

वरधारिणी ॥२९१॥

दात्री वरस्यासि महेश्वरी त्वं
यद्धारयन्ती च वरं स्वयं तम् ।
अन्तर्गता भक्तजनस्य तस्मात्
संकीर्त्यसे त्वं वरधारिणीति ॥९१॥

शीतला ॥२९२॥

कश्मीरतीर्थेषु हिमे हिमांशौ
साधोर्हृदि प्राप्तगतिः सदैव ।
या शीतलास्ति प्रथिता हितास्तु
क्रोधोष्महन्त्री निजबोधकर्त्री ॥९२॥

सुशीला ॥२९३॥

कृत्वा सुदुःशीलमिदं च विश्व-
मस्यात्मभूतापि न या स्वकीयम् ।
शीलं परानन्दमयं जहाति
साऽव्यात् सुशीला निजलीलयैनम् ॥९३॥

बालग्रहविनाशिनी ॥२९४॥

नाराधिता स्वयं यस्मा बालग्रहविनाशिनी ।
योगिनोऽपि ततो जाने लब्धुं वाञ्छन्ति शैशवम् ॥९४॥

कुमारी ॥२९५॥

चेत्योत्पत्तिर्या स्वयं चेत्यहीना
सच्चिद्रूपा रूपणीयात्मनैव ।

या सर्वादिश्चादिमध्यान्तहीना
देवी गीता सा कुमारी पुराणा ॥९५॥

सुपर्वा ॥२९६॥

नाडीषु मासेषु दिनेषु मध्ये वर्षेषु वा निर्मथितोद्धृता या।
दानादिकृत्येषु सुपुण्यरूपा ख्याता सुपर्वास्तु सुखाय सार्वा ॥९६॥

कामाख्या ॥२९७॥

कामोद्धर्तुः काम्यरूपास्ति कामरूपस्था या सर्वकामैकबीजम्।
कामाख्येयं कापि निष्कामकर्मज्ञेया पायाद्देवता मामपायात् ॥९७॥

कामवन्दिता ॥२९८॥

मदनोऽप्यहमत्र योगिनाथे
हतशक्तिस्त्वियमुल्लसत्स्वशक्तिः[1] ।
प्रथिता त्रिदशेश्वरेऽस्ति शम्भा-
विति मत्वा किल कामवन्दिता त्वम् ॥९८॥

जालन्धरधरा ॥२९९॥

अशक्तसर्वदेवेऽस्मिन् ख्याता राज्ञी कलौ युगे।
जालन्धरधरा सैव केवला देवदेवता ॥९९॥

अनन्ता ॥३००॥

योऽन्तोऽस्ति योऽन्तं विदधाति योऽन्त्य-
स्ते सन्ति सर्वेऽतिगता न यत् ताम्।
सर्वामनन्तास्य ततः स्वरूपे
स्वान्तं दृढे[2]स्वन्तमियं करोतु ॥१००॥

---

१. स्वशक्तिम्। २. दृढशोभननिश्चयम्।

श्रीकृष्णात्मपरानुभूतिविभवः श्रीकृष्णकौलः सुतं
साहिबूकौलमसूत यं च जननी बुद्धिः प्रबुद्धिः सती ।
तत्काव्ये सहजार्चनादिपदवत्याः षष्टिकाया अनूद्-
भूते नामविलासनाम्नि सुरसा भक्तिर्व्यतीताष्टमी ॥

इति श्रीमहामाहेश्वराचार्यवर्यसाहिबकौलानन्दनाथ-
विरचिते श्रीनामविलासेऽष्टमी भक्तिः ॥८॥

---

# नवमी भक्तिः ।

कामरूपनिवासिनी ॥३०१॥

सर्वभीत्रासिनी दुष्टशासिनी सुविकासिनी ।
सुहासिनी रसायास्तु कामरूपनिवासिनी ॥१॥

कामबीजवती ॥३०२॥

रूपं निजं दग्धतनुश्च भूयः
क्रुद्धेन रुद्रेण कथं लभेत ।
सर्वस्य काम्यं यदि कामबीज-
वती सदा तेन न सेविता स्यात् ॥२॥

सत्या ॥३०३॥

ब्रह्मादितः[2] सकलबुद्धिवतामधीशा
निर्णीय सर्वनिगमागमतत्त्वमेतत् ।
आज्ञापयन्त्विति शिवा परमा किमर्थं
सत्याप्यसत्यमिदमातनुते कथं वा ॥३॥

---

१. कामः । २. हे ब्रह्मादयो भवन्त आज्ञापयन्तु—इति अत्र अन्वयः । सार्वविभक्तिकस्तसिल् ।

सत्यधर्मपरायणा ॥३०४॥

असत्यां संसृतिं मत्वा कृतिनो यामुपासते ।
सत्यधर्मस्थिराः सेयं सत्यधर्मपरायणा ॥४॥

स्थूलमार्गस्थिता ॥३०५॥

स्थूलः कष्टः कर्ममार्गः प्रसिद्धः
पूर्णानन्दो ज्ञानमार्गस्तु सूक्ष्मः ।
एषा देवी स्थूलमार्गस्थितापि
पूर्णानन्दा चित्रमेतद् विचित्रम् ॥५॥

सूक्ष्मा ॥३०६॥

क्षणादेकचिदुल्लासकणाद् ब्रह्माण्डकोटयः ।
भवन्त्ययत्नतो यस्याः सा सूक्ष्मा कीदृशी शिवा ॥६॥

सूक्ष्मबुद्धिप्रबोधिनी ॥३०७॥

दुर्गमैरागमैर्गम्यमन्ते तद्दुर्गसंसृतेः ।
कथं ज्ञेयान्न चेत् सा स्यात् सूक्ष्मबुद्धिप्रबोधिनी ॥७॥

षट्कोणा ॥३०८॥

कृष्णो वायोर्मण्डले शैवे[2]मन्त्रे
हृल्लेखायाश्चक्रराजे द्वितीये ।
दीक्षामार्गेषु स्थिता षड्विधा या
सा षट्कोणा षट्[3]क्रियादार्ढ्यदास्तु ॥८॥

---

१. पुरुषः । २. ॐ नमः शिवाय । ३. अध्यापनमित्यादि ।

त्रिकोणा ॥३०९॥

मूले[1] चक्रे तेजसो[2] मण्डले वा
जम्बुद्वीपे शम्भुनेत्रत्रये वा ।
आद्या शक्तिः केवला या त्रिकोणा
सेयं माया केन मानेन माता ॥९॥

त्रिनेत्रा ॥३१०॥

यस्या निमेषाल्लयमेति विश्व-
मुन्मेषतो वोदयमेति हेतेः ।
नेत्रेश्वरस्याधिगतोत्तमाङ्गं
सा मे त्रिनेत्रा ददतां सुनेत्रम् ॥१०॥

त्रिपुरसुन्दरी ॥३११॥

त्रिबीज[3]विषया त्रिधा[4] नियमिता त्रिवेदश्रुता
त्रिलोकजननी त्रिभिस्त्रिदशनाथगेया पदैः[5] ।
त्रिधाम[6]महिमस्थली त्रिसमया[7]विभेद्या परा
त्रिनेत्रदयिता हिता त्रिपुरसुन्दरी पातु नः ॥११॥

वृषप्रिया ॥३१२॥

वृषाकपेर्यत्र[8] मृषा प्रकाशो
वृषोऽपि[9] यामाप्य वृषो[10] बभूव ।

---

१. मूलाधारे । २. ज्वालायाः । ३. त्रिबीजेति वाग्भवकामशक्तयः । ४. त्रिधेति ज्येष्ठावामारौद्रीभेदेन । ५. तत्त्वमसि, अहं ब्रह्मास्मि, अयमात्मा ब्रह्म, इत्यादिसामवेदोक्तैः । ६. त्रिधामेति सूर्यचन्द्राग्नयः । ७. भूतभविष्यद्वर्तमानैः । ८. सूर्यस्य । ९. धर्मोऽपि । १०. धर्मः ।

वृषाधिपस्तोषयति स्तवैर्यां
वृषप्रिया सा भृशतापहास्तु ॥१२॥

वृषारूढा ॥३१३॥

कैलासशिखरस्था या स्वर्णवल्लीव राजते।
वृषारूढा शिवा सा मां वृषारूढं करोत्वरम् ॥१३॥

महिषासुरघातिनी ॥३१४॥

स्ववाहस्य हरेस्तुष्ट्यै श्रान्तस्य क्षुधितस्य च।
भूताखिलमवन्ती नु महिषासुरघातिनी ॥१४॥
यद्विरोजा[धा]दपि प्रापन्महिषो वृषजां गतिम्।
वन्दनीया न कस्यैषा महिषासुरघातिनी ॥१४॥

सुम्भदर्पहरा ॥३१५॥

नीतः सुम्भो ययैकत्वमन्ते स्वाहन्तया हतः।
सुम्भदर्पहरा सा त्वं सुम्भदर्पहराऽसि वा ॥१५॥

दीप्ता ॥३१६॥

ध्यानाद्यदीयात् समवाप्य दीप्ते-
रंशं सुदीप्रं रचयन्ति विश्वम्।
सूर्यादयो दर्शनतोऽपि सैषा
दीप्ता स्वनामार्थकरी ममास्तु ॥१६॥

---

१. वृषलग्नाधिपः शुक्रः। २. धर्मबहुलम्। ३. भवानी कर्त्री। ४. क. ख. 'शिवा' पाठः। ५. दीप्तत्वकरी।

दीप्तपावकसन्निभा ॥३१७॥

भजतो यां क्षणेनैव गहनं मोहकाननम् ।
सुप्रकाशं भवत्येषा दीप्तपावकसन्निभा ॥१७॥

कपालभूषणा ॥३१८॥

कादम्बिनी बलाकानुगतेवाभाति या शिवा ।
कपालभूषणा भूषामशेषां नो ददात्वियम् ॥१८॥

काली ॥३१९॥

निजाट्टहासैर्विहितप्रकाश-
मुत्कृत्य मांसं स्वदती[2] शवानाम् ।
मुण्डं च खड्गं च करे दधाना
काली करालं हरताद् विकारम् ॥१९॥

कपालमालधारिणी ॥३२०॥

क्रौञ्चपालीसमाक्रान्तगण्डाश्माञ्जनशैलवत् ।
रोचमाना बलायास्तु कपालमालधारिणी ॥२०॥

कपालकुण्डला ॥३२१॥

उदयति तुहिनद्युतौ खरांशौ
चरमधराधरगे च भूतघस्रे[3] ।
खमिव सुधवले स्फुरत्सुशोभा
भवतु शुभाय कपालकुण्डलेयम् ॥२१॥

---

१. पुरुषस्य । २. सुष्ठु अदती । ३. चतुर्दश्याम् ।

दीर्घा ॥३२२॥

संसेविता दीर्घतपस्विनेय-[1]
मिष्टा च दीर्घेष्टकरेण देवी।[2]
दीर्घां मतिं निर्मलनिश्चयस्थां
दीर्घा ददातु प्रथिता हिता वः ॥२२॥

शिवा दूती ॥३२३॥

मन्त्रमाता सुघोषेण देवामन्त्रणकारणम्।
शिवा दूती शिवायास्तु शिवव्याप्त्या प्रपूजिता ॥२३॥

घनध्वनिः ॥३२४॥

नन्दन्ति नृत्यन्ति च केकिनो यां
गर्भं बलाका अपि धारयन्ति।
निशम्य जीवन्ति जनाश्च सिद्धां
घनध्वनिः सा घनतापहास्तु ॥२४॥

सिद्धिदा ॥३२५॥

निषेधसिद्धौ भविनां समर्था
कर्तुं स्वयं तद्व्यतिरिक्तरूपा।
या काचिदैश्वर्यकलादिबीजं
सा सिद्धिदा स्यान्मम सिद्धबुद्धेः ॥२५॥

बुद्धिदा ॥३२६॥

बुद्धिदासि किल चेत्तदीशि मे
देहि बुद्धिमिह तां सतां मताम्।

---

१. गौतमर्षिणा। २. वरुणेन।

बुद्ध्यबुद्धिमयसंसृतौ यया
जातुचिन्नहि भवेद् भिदाप्रथा ॥२६॥

नित्या ॥३२७॥

अन्ये नित्याः केषुचिद्दर्शनेषु
ख्यातास्तेऽन्यत्राप्यनित्यत्वभाजः ।
नित्या त्वेषा चेतना सर्वतन्त्र-
सिद्धान्तस्था काचनाज्ञत्वहन्त्री ॥२७॥

सत्यमार्गप्रबोधिनी ॥३२८॥

असत्यानन्तमार्गेऽस्मिन् संसारासारसागरे ।
भ्रान्तानां त्वं सदा भूयाः सत्यमार्गप्रबोधिनी ॥२८॥

कम्बुग्रीवा ॥३२९॥

कम्बुस्नानप्रिया शम्भुप्रिया देवाधिदेवता ।
कम्बुग्रीवा शिवायास्तु स्वर्णकम्बु[1]विराजिता ॥२९॥

वसुमती ॥३३०॥

नो यां विनाप्यसुमती रसदास्ति सृष्टि-
र्दाता गुणी च सुमतिः प्रथितत्वमेति ।
सम्पूजिता वसुभिरात्महृदासने सा
स्वस्तिप्रदास्तु वसुमत्यभितः कलाभिः ॥३०॥

छत्रच्छायाकृतालया ॥३३१॥

राजराजेश्वरी राजसमाजे या विराजते ।
निर्भया दयया पायाच्छत्रच्छायाकृतालया ॥३१॥

---

१. वलयाः ।

जगद्गर्भा ॥३३२॥

जगद्गर्भा[1] द्विधा देवी दर्पणश्रीरिवोत्तमा ।
वासनां गर्भवासस्य हर भूयः परेश्वरी ॥३२॥

कुण्डलिनी ॥३३३॥

येडापिङ्गलयोर्गता वितनुते सृष्टिं त्र्यवस्थामयीं
शब्दब्रह्म यतः समस्तमपि च व्यस्तं समुज्जृम्भते ।
निर्मुक्तिं प्रतिबोधयत्यभिगता या ब्रह्मनोऽभ्यन्तरं[2]
सेयं कुण्डलिनी जयत्यतितरां जीवैकजीवः शिवा[3] ॥३३॥

भुजगाकारशायिनी ॥३३४॥

बुद्धा गुरूपदिष्टेन शुद्धानन्दैकदायिनी ।
महापथं[4] गता सा त्वं भुजगाकारशायिनी ॥३४॥

प्रोल्लसत्सप्तपद्मा ॥३३५॥

पञ्चाशद्वर्णबीजैर्यां क्रमादर्चन्ति साधकाः ।
प्रोल्लसत्सप्तपद्मेयं षोडशाधारगोचरा ॥३५॥

नाभिनालमृणालिनी ॥३३६॥

जातो ब्रह्मा यतश्चित्रं ब्रह्माण्डमतनोद् विभुः ।
ब्रह्मताबोधिकाऽस्त्वस्य नाभिनालमृणालिनी ॥३६॥

---

१. जगत् गर्भे यस्याः सा, जगति गर्भे या सा, दर्पणनगर न्यायेन । २. सुषुम्नान्तरम् । ३. क. ख. 'शिवः' पाठान्तरम् ४. ब्रह्मपथम् ।

मूलाधारा ॥३३७॥

चन्द्रस्त्रावापूरिता योगिनाथै-
गम्या रम्यारामभूमिर्निकामम् ।
पारावारज्ञानसारैकधारा
मूलाधाराधारभूता ममास्तु ॥३७॥

निराकारा ॥३३८॥

जात्वप्यज्ञैरदृश्या यत्तज्ज्ञैरप्येकतां गतैः ।
अतो गीताखिलाकारा निराकारेति सूरिभिः ॥३८॥

वह्निकुण्डकृतालया ॥३३९॥

पीताभिर्लोहिताभिश्च सिताभिश्च विभाससे ।
ज्वालामालाभिरेषा त्वं वह्निकुण्डकृतालया ॥३९॥

वायुकुण्डसुखासीना ॥३४०॥

तस्माद् वायुः प्रसिद्धोऽत्र पवनश्च सदागतिः ।
वायुकुण्डसुखासीना यस्मात् त्वं दीनवत्सला ॥४०॥

निराधारा ॥३४१॥

सुधाधारासारप्रशमितविपत्तापनिकरा
विकाराकाराणां हरणचतुरा काचन परा ।
असेर्धारापारेऽम्बरवदधरेऽज्ञानगहने
निराधारा कारां हरतु मम संसारविसराम् ॥४१॥

---

१. पूरकेण । २. बन्धनम् ।

निराश्रया ॥३४२॥

निःशेषा यां जनाः श्रित्वा वर्तन्ते या न कंचन ।
सदाशयलयस्थाना सा द्विधास्ति निराश्रया[1] ॥४२॥

श्वासोच्छ्वासगतिः ॥३४३॥

यस्या दुर्गमपञ्च[2]मार्गविदुषां
भूतं भविष्यच्च सज्[3]-
ज्ञानं भाति करे सितोपल[4]तुला-
मालम्बितं जृम्भितम् ।
अभ्यासात् किल सद्गुरोः करुणया
प्राप्तात् समाप्तात् स्वयं
श्वासोच्छ्वासगतिर्गतिर्मतिमतां
भूयात् सतां सम्मता ॥४३॥

जीवा ॥३४४॥

यां नेन्द्रियाणि विषया न मनो न बुद्धि-
र्नो वा गुणा न च विना परमां महेशीम् ।
प्राणा विधातुमपि नो किमपि क्षमाः स्यु-
र्मां जीवयत्वियमजीवतयेह जीवा ॥४४॥

---

१. निर्गत आश्रयो यस्याः सा, निःशेष आश्रयो यस्याः सा, आश्रयात् निर्गता वा । २. पञ्चमहाभूतानां मार्गः । ३. वर्तमानम् । ४. स्फटिकम् ।

ग्राहिणी ॥३४५॥

द्विधा भूतः विधत्ते या लीलामेकैव काचन ।
ग्राहिणी सा सदा भूयाद् ग्रहाग्रहग्रहार्तिहृत् ॥४५॥

वह्निसंश्रया ॥३४६॥

या वह्निसंश्रया सर्वाधारभूता निराश्रया ।
आसनत्वं गतो यस्याः संश्रयः स च तां नुमः ॥४६॥

वह्नितन्तुसमुत्थाना ॥३४७॥

जयन्ती कोटिसूर्येन्दुवैश्वानररुचिं शुचिः ।
वह्नितन्तुसमुत्थाना कीदृशी चित्रमीश्वरी ॥४७॥

षड्रसास्वादलोलुपा ॥३४८॥

कथं सुधाशिनोऽपीहावतरेयुर्न चेद् भवेत् ।
मर्त्यलोकप्रिया देवी षड्रसास्वादलोलुपा ॥४८॥

तपस्विनी ॥३४९॥

ययावतारं गतयाद्रिराज-
गृहेऽखिलेश्याप्यविचिन्त्यभासा ।
उग्रैस्तपोभिर्मृदुतां स उग्रो
नीतो हितायाऽस्तु तपस्विनी सा ॥४९॥

---

१. ग्राह्यग्राहकभेदेन । २. ग्रहाश्च अग्रहाश्च, तेषां ग्रहोऽभिनिवेशः । ३. एतत् चित्रम् । ४. देवाः । ५. विश्वस्वामिन्या ।

तपःसिद्धिः ॥३५०॥

शोभां कृशां[1] अप्यरमाप्नुवन्ति
तृप्ता भवन्ति क्षुधिताः सदापि ।
तपस्विनः प्राप्य सुनिर्णया यां
सा मे तपःसिद्धिरिहैव भूयात् ॥५०॥

तापसी ॥३५१॥

उष्णेऽपि शीते समये न खिन्नाः
क्रोधेन कामेन न निर्जिता वा ।
कथं भवेयुर्[2]यदि नातिभक्ति-
प्रिया भवेः पार्वति तापसी त्वम् ॥५१॥

तपःप्रिया ॥३५२॥

भयात् त्रातुं फलं दातुं क्षमा निर्यत्नतोऽपि च ।
तथापि त्वं किमर्थं नु न जानेऽसि तपःप्रिया ॥५२॥

तपोनिष्ठा ॥३५३॥

निरिष्टापि[3] तपोनिष्ठा दृष्टादृष्टफलप्रदा ।
अभीष्टदेवतानिष्ठां[4] सहजां नो ददात्वियम् ॥५३॥

तपोयुक्ता ॥३५४॥

युक्त्याभिभजिता मुक्तितीर्थसोपानतां गता ।
अन्तकान्तविधाशक्ता[5] तपोयुक्ता जयत्यसौ ॥५४॥

---

१. क. 'कृशामप्य' पाठः । २. पुरुषाः । ३. निर्गतमिष्टं वस्तु यस्याः । ४. अवस्थाम् । ५. अन्तकस्य अन्तकरणे शक्ता ।

तपसः सिद्धिदायिनी ॥३५५॥

बहुभ्यो बहुभी रूपैस्तपसः सिद्धिदायिनी ।
बहुशः केवलानन्दसुन्दरी पातु देवता ॥५५॥

सप्तधातुमयी मूर्तिः ॥३५६॥

सप्तधातुमयी मूर्तिर्भूताऽमूर्तिरपि स्वयम् ।
सद्विचारपरिस्फूर्तिं वितरत्वचिरादियम् ॥५६॥

सप्तधात्वन्तराश्रया ॥३५७॥

निर्धातुर्धातुमच्छृङ्गराजगोत्रमणिः[1] शिवम् ।
धातुः पूज्या ददात्वेषा सप्तधात्वन्तराश्रया ॥५७॥

देहपुष्टिः ॥३५८॥

युक्तो यया तत्क्षणभङ्गुरं च
जानाति कल्पस्थिरवत् स्वदेहम् ।
जनो मनोऽभीष्टकरीह भूयात्
सा देहपुष्टिः सहजैकहृष्टिः ॥५८॥

मनस्तुष्टिः ॥३५९॥

दृष्टिः स्थिरा तस्य विनैव दृश्यं
संवर्धते हृष्टिरकृत्रिमा च ।
उत्कृष्टता च प्रकटेह यस्य
तुष्टा मनस्तुष्टिरदुष्टबुद्धेः ॥५९॥

---

१. हिमालयः ।

अन्नपुष्टिः ॥३६०॥

कथं नु भूतानि[1] दृढत्वमीयुः
संमिश्रितानि क्षणतः स्खलन्ति ।
कर्मादिदेवी यदि नान्नपुष्टिः
सर्वैकसारोऽत्र भवेत् सहाया ॥६०॥

बलोद्धता ॥३६१॥

स्वस्ववर्गे प्रथां यान्ति सुरासुरनरोरगाः ।
यदाश्रयादियं भूयाद्धिता माता बलोद्धता ॥६१॥

ओषधिः ॥३६२॥

यैराक्रान्तः स्वविषयसुखं वेद दुःखं मनुष्यो
दोषा दूष्याः[2] सपदि भजनात्ते स्वयं स्युर्यदीयात् ।
एषा रोषप्रमुखमखिलं क्लेशदं तोषहेतो
रोगं शोषं नयतु समये सौषधिर्ध्यानमात्रात् ॥६२॥

वैद्यमाता ॥३६३॥

उपास्य यामन्यशरीरमध्य-
प्रवेशमात्मीयधिया विहाय ।
विदन्ति सर्वां प्रकृतिं सुवैद्याः
सा वैद्यमातेति सतां मतासि ॥६३॥

द्रव्यशक्तिः ॥३६४॥

गुणैरनेकैः प्रथितप्रभावा
प्रयोगतो या हितकृज्जनानाम् ।

---

१. महाभूतानि । २. नाशनीयाः ।

मातेव सर्वामयहानिशक्ता
मा द्रव्यशक्तिर्हरतादशक्तिम् ॥६४॥

प्रभाविनी ॥३६५॥

वक्त्रेषु नेत्रेषु करेषु भाग्य-
वतां प्रकाशापि च सर्वयाता ।
मनःस्थितिज्ञानकरी जनानां
प्रभाविनी भूषयतु स्वभाभिः ॥६५॥

वैद्या ॥३६६॥

प्रसादं कुरुषे त्वं चेद् वैद्या परमदेवता ।
रोगिणः शोकदास्ते स्युर्भवरोगा अपि स्वयम् ॥६६॥

वैद्यचिकित्सा ॥३६७॥

यत्प्रसादान्मनुष्योऽपि धन्वन्तरियशो भृशम् ।
एति वैद्यचिकित्सेयं विचिकित्साज्वरं हर ॥६७॥

सुपथ्या ॥३६८॥

तस्यामया नैव कदाचन स्यु-
श्चेत् स्युस्तदा तत्क्षणमेव नाशम् ।
विनौषधं तेऽप्यवशाः समीयु-
श्चित्ते स्थिता यस्य सदा सुपथ्या ॥६८॥

---

१. क. ख. 'प्रभावती' पाठान्तरम् । २. भक्तम् । ३. सन्देह-
वरम् ।

रोगनाशिनी ॥३६९॥

ध्यानादिभिर्गदं हन्ति सर्वेन्द्रियलयं यतः ।
अयत्नाद् गीयते तस्मादीशानी रोगनाशिनी ॥६९॥

मृगया ॥३७०॥

विसार्य कार्पण्यविचार्य देह-
मृदुत्वमुद्धूतसुदर्पसत्त्वाः ।
उपासते शूरवराः सदा यां
संकीर्तिता सा मृगयागमज्ञैः ॥७०॥

मृगमांसादा ॥३७१॥

सङ्गेन जायते दोषो गुणो वेत्यद्य निश्चितम् ।
भूता यन्मृगमांसादा स्ववाहहरिसङ्गतः ॥७१॥

मृगत्वक् ॥३७२॥

या यज्ञशीलैर्विलसद्विचित्र-
वाला पवित्रा वितनोति नद्धा ।
कांचित् प्रभां दीक्षितचिह्नभूता
मृगत्वगेषा कथिता कथाज्ञैः ॥७२॥

मृगलोचना ॥३७३॥

यन्नेत्ररागसंलुब्धः पितृकाननमध्यभाक् ।
आगाद् बन्धनमीशानमृगः सा मृगलोचना ॥७३॥

वागुरा ॥३७४॥

भूमिगानां कथं वश्या भवेयुर्विहगा न चेत् ।
युक्तियुक्ता भवेर्भूता वागुरा गुरुरद्भुता ॥७४॥

बन्धरूपा ॥३७५॥

नित्यं विमुक्तोऽपि ययैष बद्ध-
म्मन्यो जनो देवि समावृतेहः ।
सा बन्धरूपापि विमोक्षबन्ध-
सम्बन्धबन्धं परिभिन्दती नः ॥७५॥

वधरूपा ॥३७६॥

वधरूपासि यदि त्वमीदृगस्यै[1]
वधमीशानि विधेहि येन दीनः ।
सुसुखेन प्रविहाय कायभावं
भवतीमेति दुरन्तमद्भुतेन ॥७६॥

वधोद्धता ॥३७७॥

अवध्यो हि सदा स्वात्मा देहो वध्यस्त्वयत्नतः ।
उन्मत्त इतरः कः स्विद् देवी यस्य वधोद्धता ॥७७॥

वन्दी ॥३७८॥

यान्यं स्मृता मुञ्चति सर्वबन्धाद्
वन्दी कथं स्यात् स्वयमीश्वरी सा ।
जाने त्वियं भक्तजनैरिहैव
वन्दीकृतास्ति सुमनोनिकाय्ये ॥७८॥

वन्दिस्तुताकारा ॥३७९॥

यदाकारं नहि स्तोतुं वाचस्पतिरपि क्षमः ।
अहो वन्दिस्तुताकारा सा शक्तिर्भक्तवत्सला ॥७९॥

---

१. अस्य मे ।

कारावन्धविमोचनी ॥३८०॥

विरोचनरुचिः काचिच्चिदानन्दैकसुन्दरी ।
विषमे समये भूयात् कारावन्धविमोचिनी ॥८०

शृङ्खला ॥३८१॥

सदा वनविहारस्था अपि नागा मदोद्धताः ।
ययावयं इवाबद्धा वश्याः सा शृङ्खला मता ॥८१

खलहा ॥३८२॥

मन्त्रैर्न नौषधिमयैर्विविधैः प्रयोगैः
शान्तिं भजन्ति खलु ये खलनागराजाः ।
सन्तः क्षमैकविषयाः स्मरणाद्यदीयात्
तां प्रापयन्त्यपि च तान् खलहासि सा त्वम् ॥८२

विद्युत् ॥३८३॥

तेजसा रोचते काचिद्या देवी जलदान्तरे ।
विद्युज्जयति सा नित्यं वडवाग्निसहोदरी ॥८३।

दृढबन्धविमोचिनी ॥३८४॥

अभेद्यो योऽस्त्रशस्त्रौघैर्भवबन्धं तमेव या ।
हरति स्मृतिमात्रात् सा दृढबन्धविमोचिनी ॥८४॥

अम्बिका ॥३८५॥

यदन्तरा न क्षुधया तृषा वा
जनोऽर्दितत्वं लभते कदाचित् ।

---

१. अग्निः । २. एडका इव ।

ममाम्बिका दुर्भ्रमकाममेषा
दृशा भृशं नाशयतादशेषा ॥८५॥

अम्बालिका ॥३८६॥

बालो मृदुः किञ्चन वा विधातु-
मनीश्वरोऽपीश्वरि पुष्टहृष्टः ।
कथं भवेत् त्वं न यदा दयाभि-
रम्बालिका पोषणकारिणी स्याः ॥८६॥

अम्बा ॥३८७॥

जम्भारिसंस्तुता रम्भाजघना दम्भहारिणी ।
अम्बा भूयो हरत्वेषा सम्भवं दुर्भवे भवे ॥८७॥

स्वक्षा ॥३८८॥

दक्षा स्वात्माच्छादनक्रीडितेषु
तक्षा सर्गाह्वानगेहं विधातुम् ।
दक्षाहन्ताहानिहेतुः समक्षं
स्वक्षा रक्षाकारिणीयं ममास्तु ॥८८॥

साधुजनार्चिता ॥३८९॥

साधवो माधवात्मत्वं याता यद्दयया भयाः ।
नन्दयन्त्यखिलान् दृष्ट्या सेयं साधुजनार्चिता ॥८९॥

कौलिकी ॥३९०॥

या नादेन च बिन्दुनापि कलया भक्तं विरक्तं भवात्
संतोषं नयति प्रकाशविशदा देवी ततोऽपि स्वताम् ।

वैराग्यं गतमद्भुतामथ भवोत्तीर्णां भवस्थां च या ।
स्वच्छन्दामिह कीर्तिता सुकृतिभिः सालौकिकी कौलिकी ॥९०॥

कुलविद्या ॥३९१॥

बहुदलभावनसंकुलभावा कुलकुलकोविद्भावबलेन ।
सुलभरसा सरसालसभासा विलसतु चेतसि सा कुलविद्या ॥९१॥

सुकुला ॥३९२॥

जनपद्मिकुलानि यत्कुलाया-
दलमाविष्कृततां प्रयान्ति यत्र ।
विलयं च दलद्वयाकुलानि
सुकुला सा नकुलार्चिता हितास्तु ॥९२॥

कुलपूजिता ॥३९३॥

वलयैः सलयैः स्फुरत्सुबाहुर्मुहुरीषच्चलमेखलाकलापा ।
अमलाचललोचनारविन्दा स्थिरताकृत् कुलपूजिताजितास्तु ॥

कालचक्रभ्रमा ॥३९४॥

ययावनद्धा अवशाः खगेशा
भ्राम्यन्त्यविश्रामतया प्रतिस्वम् ।
वीथीषु सेयं किल कालचक्र-
भ्रम शमारामकरी ममास्तु ॥९४॥

भ्रान्ता ॥३९५॥

जीवः शिवाभेदमयोऽपि भावं
स्वीयं सुविस्मार्य कथं भ्रमार्तः ।

---

१. पद्माः । २. शिवः । ३ ग्रहेशाः ।

इतस्ततः स्याद्यदि न त्वमस्य
भ्रान्ता स्थितिं चेतसि संविदध्याः ॥९५॥

विभ्रमा ॥३९६॥

यां विना न सुदृशोऽपि भूषया-
शेषया विलसिताश्च चेतसः ।
संहरन्ति गतिमाशु सम्भ्रमं
विभ्रमा हर गमागमागमम्[1] ॥९६॥

भ्रमनाशिनी ॥३९७॥

विषमे समये कामयमोद्भावितसम्भ्रमे ।
समया दयया भूयान्मम सा भ्रमनाशिनी ॥९७॥

वात्याली ॥३९८॥

खेलन्ती या वेलयैवेन्द्रजाल-
कर्त्री हर्त्री सूर्यचक्षुःसुसङ्गम् ।
नेमिर्भातीवास्तवाहा चलन्ती
वात्याली सा कीर्तिता कालविद्भिः ॥९८॥

मेघमाला ॥३९९॥

कुतोऽपि योदेति लयं च याति
कुत्रापि सर्वस्पृहणीयभावा ।
या पान्थयोषिद्वरसङ्गहेतुः
सा मेघमाला कलिता कलाज्ञैः ॥९९॥

---

१. गमश्च आगमश्च, तयोरागम आगमनम् ।

सुवृष्टिः ॥४००॥

अदृष्टशोभा विदिशो दिशोऽपि
भवन्ति यामाप्य सुवृष्टिरेषा ।
न कस्य तुष्ट्यै भवतीह सृष्टि-
पुष्ट्येकहेतुः सुविकासिदृष्टेः ॥१००॥

श्रीकृष्णात्मपरानुभूतिविभवः श्रीकृष्णकौलः सुतं
साहिबकौलमसूत यं च जननी बुद्धिः प्रबुद्धिः सती ।
काव्ये तस्य निजात्मबोधसहजे कश्मीरविख्यातता-
हेतोर्दुर्गकलावपि प्रवितता भक्तिर्नवाङ्कागमत् ॥१०१॥

इति श्रीमहामाहेश्वराचार्यवर्यसाहिबकौलविरचिते नाम-
विलासे महाकाव्ये नवमी भक्तिः ॥९॥

---

# दशमी भक्तिः

मस्यवर्द्धिनी ॥४०१॥

बीजमङ्कुरतां याति पत्रादित्वं च सापि तत् ।
बीजत्वं यद्दयाबद्धं सा देवी सस्यवर्द्धिनी ॥१॥

अकारा ॥४०२॥

भूमिव्याप्ता ब्रह्मरूपा ऋगाख्यवेदोत्पत्तिर्गार्हपत्यासना या ।
गर्वोऽखर्वः सर्ववर्णैकपूर्वा साकारेयं गीयते योगिनाथैः ॥२॥

इकारा ॥४०३॥

अर्धा मात्रा शम्भुरूपा त्रिलोकी-
मुत्क्रान्ता या शुद्धबोधासनस्था ।
कामाख्यापि त्यक्तकामाभिगम्या
रम्येकारा सेयमाकारहीना ॥३॥

उकारा ॥४०४॥

व्याप्तव्योमा दक्षिणाग्न्यासनस्था
विष्णुप्रस्था या यजुर्वेदमाता ।

---

१. तत्त्वेन । २. उपनिषत्पक्षेण इयं कथा । ३. अयमपि उपनिषत्पक्षः ।

सर्वाधारः सच्चिदानन्दसारा
सोकारेयं कीर्तिता मूर्तविद्भिः ॥४॥

ऐकाररूपिणी ॥४०५॥

तनोति बिन्दुहीनापि जप्ता वाग्भव[1]वैभवम् ।
नवं नवं सुभव्यानां देवतैकाररूपिणी ॥५॥

ह्रींकारी ॥४०६॥

जप्ता येयं शाक्त[2]बालैकजीवो
नेत्रे पद्मां पद्मवक्त्रेऽपि वाणीम् ।
बाधाहीनां साधकानां विधत्ते
ह्रींकारीयं हृद्गता नः सदास्तु ॥६॥

बीजरूपा ॥४०७॥

मात्राङ्कुरा वर्णदला च पाद-
स्कन्धा सुशाखा बहुभावपुष्पा ।
बोधं फलं नो वितरत्वनन्ता
सा बीजरूपा निगमद्रुमस्य ॥७॥

क्लींकारा ॥४०८॥

क्लींकारेयं यस्य चित्ते स्थिता त्वं
वीरेशानं मारनाराचबाणैः ।
विद्धा देव्यो नागकन्याश्च नार्यो
नित्यं कामात् तं कथं न स्मरन्ति ॥८॥

---

१. बीजम् । २. शाक्तमन्त्राणाम् ।

अम्बरवासिनी ॥४०९॥

अन्यान्यविषयान् भक्तदेवादिभ्यो नितीर्य सा ।
स्वयं निर्विषया जाने संवृत्ताम्बरवासिनी ॥९॥

सर्वाक्षरमयी शक्तिः ॥४१०॥

अहन्तासम्पुटेदन्ताविलासविशदा सदा ।
सर्वाक्षरमयी शक्तिः स्फुरताद्धृदये मम ॥१०॥

अक्षरा ॥४११॥

किं वदेद् विधिरियं श्रुतिश्च किं-
रूपिणी ननु भवेज्जनः कथम् ।
वृत्तिवानिह भवेच्च देवता
नाक्षरा यदि भवेत् कृपाकरी ॥११॥

वर्णमालिनी ॥४१२॥

कथं न तन्मनो जप्ये ध्याने वास्ति स्थिरं परम् ।
येन सद्गुरुतो ज्ञाता शाङ्करी वर्णमालिनी ॥१२॥

सिन्दूरारुणवक्त्रा ॥४१३॥

यामालोक्य विमोहान्धतमसं याति दूरतः ।
सिन्दूरारुणवक्त्रा सा कस्य श्लाघ्या न धीमतः ॥१३॥

सिन्दूरतिलकप्रिया ॥४१४॥

मुक्तालल्न्तिकं[1] वक्त्रं सिन्दूरतिलकप्रिया ।
दधाना भाति शृङ्गारयोगं यातो विधुर्यथा ॥१४॥

---

१. आभरणविशेषः ।

वश्या ॥४१५॥

गत्या मत्या दर्शनेनापि वाण्या
सर्वे मोहं तस्य[1] याता न किंचित् ।
ध्यायन्तीयं येन सम्यङ्महेशी
वश्यावश्यं सेविता देवदेवी ॥१५॥

वश्यबीजा ॥४१६॥

योगीश्वरकलां यान्ति हित्वा मायां दुरत्ययाम् ।
भक्ता यद्दयया सेयं वश्यबीजेति कीर्तिता ॥१६॥

लोकवश्यविभाविनी ॥४१७॥

खेलति स्तोकवल्लोकैर्[2]विशोकः स कथं सुधीः ।
आराधिता न येनेयं लोकवश्यविभाविनी ॥१७॥

नृपवश्या ॥४१८॥

वाचैव या करोतीशं दुर्गतं तमपीश्वरम् ।
नृपवश्या जयत्येषा सिंहासनमहेश्वरी ॥१८॥

नृपैः सेव्या ॥४१९॥

तत्तत् किमीप्सितं यद्यन्न प्राप्नोति कृती जनः ।
यस्येदृशी नृपैः सेव्या प्रसन्ना परमेश्वरी ॥१९॥

नृपवश्यकरी ॥४२०॥

नृपवश्यकरी हितास्ति यस्मै
खलु तत्पादरजःकणाधिगत्यै ।

---

१. पुरुषस्य । २. बालकवत् ।

अखिलस्पृहणीयतां गतोऽपि
स्पृहयालुर्भवतीह राज[1]राजः ॥२०॥

प्रिया[2] ॥४२१॥

महिषी ॥४२२॥

यथा बहिर्भाति नृपः कलाभि-
स्तथैव या सर्वकला निशान्ते ।
महेश्वरीयं महिषी दृशा मां
सन्तोषकर्त्र्यानयतु प्रकाशम् ॥२२॥

नृपमान्या ॥४२३॥

अगण्यपुण्यनैपुण्यो वदा[3]न्यश्च भवेज्जनः ।
सोऽयं यस्य प्रसन्ना त्वं नृपमान्या महेश्वरी ॥२३॥

नृमान्या ॥४२४॥

असामान्यसौजन्यजन्यातिपुण्या
भवेत्तस्य कीर्तिः कथं नैव याता ।
दिवं वा भुवं यस्य धन्यस्य देवी
नृमान्या प्रसन्ना शिवा हृन्निषण्णा ॥२४॥

नृपनन्दिनी ॥४२५॥

अश्वो मनुष्योऽपि गजादिको वा
दाक्ष्यं प्रतिस्वं विषये प्रयातः ।

---

१. धनदः । २. अस्य नाम्नो विलासोऽस्मद्दृष्टपुस्तकेषु न दृश्यते । ३. दाता ।

आयाति तं नन्दयितुं क्षितीशं
यच्चित्तयाता नृपनन्दिनी त्वम् ॥२५॥

नृपधर्ममयी ॥४२६॥

नानावाहनसंवाह्या च्छत्रचामरलक्षणा।
सदा सुखमयी जीयान्नृपधर्ममयी शिवा ॥२६॥

धन्या ॥४२७॥

धन्यास्य माता स्वकुलं च धन्यं
धन्याः सहाया विषयो[1]ऽपि धन्यः।
धन्या च मूर्तिर्धिषणा[2]पि धन्या
धन्यार्चिता येन महेश्वरी त्वम् ॥२७॥

धनधान्यविवर्द्धिनी ॥४२८॥

उद्यमेन विनायाति धनं धान्यं च तस्य हि।
सन्निधिं सेविता येन धनधान्यविवर्द्धिनी ॥२८॥

चतुर्वर्णमयी मूर्तिः ॥४२९॥

उपयोग्या मिथो देवी स्वस्वलक्षणलक्षिता।
चतुर्वर्णमयी मूर्तिः कीर्तनीया न कस्य सा ॥२९॥

चतुर्वर्णैश्च पूजिता ॥४३०॥

वेदाध्ययनभिक्षाद्यैस्त्राणाद्यैर्मां सदावतात्।
व्यापाराद्यैश्च सेवाभिश्चतुर्वर्णैश्च पूजिता ॥३०॥

---

१. देशः। २. बुद्धिः।

सर्वधर्ममयी सिद्धिः ॥४३१॥

निर्धर्मस्वात्मभावस्थशुद्धबुद्ध्येकसाक्षिणी ।
सर्वधर्ममयी सिद्धिर्भूयान्नामार्थकारिणी ॥३१॥

चतुराश्रमवासिनी ॥४३२॥

एकैकाश्रमधर्मेषु वसत्यन्यः कथंचन ।
अक्रमेणाद्भुता देवी चतुराश्रमवासिनी ॥३२॥

ब्राह्मणी ॥४३३॥

ब्रह्माध्येत्री ब्रह्मवक्त्रासनस्था
ब्रह्मध्यानात् त्यक्तदुर्भ्रान्तितान्तिः ।
ब्रह्मज्ञानोल्लासिचित्ता महेशी
भूयाद्भूत्यै ब्राह्मणी सर्वपूज्या ॥३३॥

क्षत्रिया ॥४३४॥

क्षतं क्षतं स्वादयतेह यस्याः
सर्वस्य खर्वत्वविनाशहेतोः ।
सूर्येन्दुवंशप्रविभासिनी सा
मां क्षत्रिया पातु सदातुरत्वात् ॥३४॥

वैश्या ॥४३५॥

व्यापारादिकलापूर्णा सर्ववर्णैकपोषणी ।
वैश्यावश्यं महेशानी वश्या भवतु सर्वदा ॥३५॥

---

१. वेदः ।

शूद्रा ॥४३६॥

शिवा सेवाप्रिया शूद्रा ब्रह्मपादतलस्थिता ।
जयत्यभयदा वादसादहीना स्वभावतः ॥३६॥

अवरवर्णजा ॥४३७॥

ज्वलन्मुखविलोचना परिललत्पदाभ्रध्वनि-
स्खलन्मुखरवाक् चलत्पदविधूतपार्श्वाचला ।
भ्रमद्भ्रुकुटिमञ्जरी सुविनमन्नितम्बस्थली
विचाररुचिरालकास्त्ववरवर्णजा नः श्रिये ॥३७॥

वेदमार्गरता ॥४३८॥

यस्या निःश्वासतो वेदाः संजाताः सुस्फुटक्रमाः ।
अहो सापि स्वयं देवी वेदमार्गरता परा ॥३८॥

यज्ञा ॥४३९॥

द्रव्येण केचित्तपसापि केचित्
स्वाध्यायवत्त्वेन च केचनान्ये ।
ज्ञानेन योगेन च यां यजन्तो
गच्छन्ति सिद्धिं शिवदास्तु यज्ञा ॥३९॥

वेदविश्वविभाविनी ॥४४०॥

विश्वं वेदप्रचाराय वेदो विश्वप्रवृत्तये ।
यया विभावितः सेयं वेदविश्वविभाविनी ॥४०॥

---

१. कष्टम् । २. 'विचाराय' ख. पाठः ।

अस्त्रशस्त्रमयी विद्या ॥४४१॥

दुरवाप्यं कथं नै ते चक्रवर्तित्वमाप्नुयुः ।
अस्त्रशस्त्रमयी विद्या न तैश्चेत् स्याद् वशीकृता ॥४१॥

वरशस्त्रास्त्रधारिणी ॥४४२॥

कालभीहारिणी भूयाद्रणभूमिविहारिणी ।
आनन्दकारिणीशानी वरशस्त्रास्त्रधारिणी ॥४२॥

सुमेधाः ॥४४३॥

यदंशवित्त्येह महामतिः स्या-
च्छास्त्राण्यनन्तानि तनोति तानि ।
एकश्चिदुल्लासकणोऽपि यस्याः
सा मे सहायास्तु सदा सुमेधाः ॥४३॥

सत्यमेधा ॥४४४॥

अन्यो हि कश्चिज्जडसङ्गमाप्तो
जडत्वमेत्येव सुधीयुतोऽपि ।
इयं तु देवी जडविश्वमध्य-
गता सदाप्यस्ति हि सत्यमेधा ॥४४॥

भद्रकाली ॥४४५॥

भद्रं ध्याता नतनु तनुतेऽहंकृतिं वा तनुं या
च्छिद्रं मन्दं रचयति मुधाज्ञानजातं नजातम्[1] ।
रुद्राङ्कस्थापि च परिहरत्यद्भुता रौद्रभावं
भक्तानां सा भवतु भविनां भद्रकाली श्रिये वः ॥४५॥

---

१. अमरास्यम् ।

अपराजिता ॥४४६॥

गोपालो विष्णुरीशोऽपि रुद्रो यद्दयया सदा ।
शक्रो जिष्णुश्च लोकं सा हितायास्त्वपराजिता ॥४६॥

गायत्री ॥४४७॥

ज्ञाता येन स वेत्ति सर्वनिगमान् ध्याता च येनाम्बिका
ध्यायन्ति त्रिदशाः सदैव सुदृशं तं कीर्तिता येन वा ।
कीर्तिस्तस्य पुनाति लोकमखिलं येनार्चिता वा शिवा
गायत्री न च केन केन सततं के के न वार्चन्ति तम् ॥४७॥

सत्कृतिः ॥४४८॥

त्वं सत्कृतिर्यदि गता हृदि सद्दयालु-
र्नाप्नोति तर्हि भुवि राज्यमशत्रुशङ्कम् ।
को नापि देवपतितां दिवि वाजभावं[1]
रुद्रत्वमद्भुतकलां हरितां[2] स्वतां वा ॥४८॥

सन्ध्या ॥४४९॥

ध्यायन्ति यां द्विजवराः परहर्षपूर्ण-
निश्चिन्तचित्तनगरेऽस्ति च बोधयन्ती ।
तान् या परात्मविषयाभ्यनुसन्धिमेषा
सन्ध्येति काचन परा गदितैकसन्धैः ॥४९॥

सावित्री ॥४५०॥

सूते विश्वं भेदवत्त्वं च नैव
भिन्नं यद्वद् वीचिसंघं महाब्धिः ।

---

१. ब्रह्मताम् । २. नारायणताम् ।

अन्ते तद्वल्लीयते यत्र चैतत्
सावित्री सा कीर्तिता सारविद्भिः ॥५०॥

त्रिपदाश्रया ॥४५१॥

त्रिलोका भान्ति तस्याग्रे त्रिपदा[1] इव लङ्घितुम् ।
येनेयं निश्चितं ज्ञाता निर्भया त्रिपदाश्रया ॥५१॥

त्रिसन्ध्या ॥४५२॥

त्रिकालास्त्रिलोकास्त्रिवेदास्त्रिदेवा-
स्त्रयो वह्नयस्त्रिस्वरा यत्र चैक्यम् ।
प्रयान्ति स्वभावात् सदा काचिदेषा
त्रिसन्ध्येति गीता हितायास्तु माता ॥५२॥

त्रिपदी ॥४५३॥

न त्वं यदि त्वमसि तत्तदसीति नाथो
यां बोधयत्यतिविरक्तमतः[2] सुशिष्यम् ।
आनन्दधामजननीमनणीयसी सा
देवी जयत्यतितरां त्रिपदी महेशी ॥५३॥

धात्री ॥४५४॥

शङ्कातङ्ककलङ्कानां दात्री तृणवदीश्वरी ।
सन्धात्री बोधदुग्धस्य धात्री नः कृपयावतात् ॥५४॥

सुपर्वा ॥४५५॥

अथर्ववेदिभिः सर्वसुपर्वातृप्तये[3] शिवा ।
कामनीया जयत्येषा सुपर्वाखर्वगर्वभूः ॥५५॥

---

१. क. 'त्रिपादाः' पाठः । २. संसारात् । ३. देवतानामासमन्तात् तृप्तये ।

सामगायनी ॥४५६॥

सकलं परिमोहयत्यवश्यं सकृदुच्चारितवत्यनन्तरूपम् ।
स्वर[1]संघमसङ्गभङ्गुरं या हृदयस्था मम सामगायनी सा ॥५६॥

पाञ्चाली ॥४५७॥

यैकापि पञ्चधात्मानं पञ्चा[2]नामप्रपञ्चयत् ।
प्रीतये नयतु स्थैर्यं पाञ्चाली चञ्चलं मनः ॥५७॥

बालिका ॥४५८॥

बालिकेव कृतवस्त्रपु[3]त्रिकालालनप्रकृतहर्षनिर्भृता ।
खेलति स्वयमिदन्त्वमागता या बलं मम करोतु बालिका ॥५८॥

बाला ॥४५९॥

या बालतर्जितमयूरकचत्कलापा
स्वालापमूकलपनीकृतकाकपुष्टा ।
गत्यालसीकृतमरालवरा गतौ सा
बाला बलाबलनिधिः परिशर्मदास्तु ॥५९॥

बालक्रीडा ॥४६०॥

निरुद्वेगं निरुद्वेगं निःशङ्कं या स्थितिं गता ।
निष्कलङ्कं प्रसिद्धेह बालक्रीडा जयत्यसौ ॥६०॥

सनातनी ॥४६१॥

प्रभवप्रमुखज्ञानशालिनी या महेश्वरी ।
ब्रह्मादीनां स्वयं तत्त्वावर्जिता सा सनातनी ॥६१॥

---

१. सरिगमपदनि; इति । २. पाण्डवानाम् । ३. पाञ्चालिका ।

गर्भाधारधरा ॥४६२॥

चतुरङ्गुलविस्तारा जरायुर्विततं कथम् ।
गर्भं दध्यान्न चेत् कुर्याद् गर्भाधारधरा दयाम् ॥६२॥

शून्या ॥४६३॥

यत्कलैका त्रिलोकीयं नानात्वरचनाञ्चिता ।
शून्येति सा कथं गीता सदापूर्णा महेश्वरी ॥६३॥

गर्भाशयनिवासिनी ॥४६४॥

बाधते न क्षुधा तृष्णा न च यद्दययान्तरा ।
गर्भस्थ दशमास्स्वेषा गर्भाशयनिवासिनी ॥६४॥

सुरारिघातिनी कृत्या ॥४६५॥

अमरा निर्जरा देवाः कथं स्युर्यदि नेश्वरी ।
सुरारिघातिनी कृत्या कृपया निजया भवेत् ॥६५॥

पूतना ॥४६६॥

यत्स्तन्यस्य स गोपालो जीवेन सह पानतः ।
बली भूत्वाहनद्दैत्यानबलः पूतनेति सा ॥६६॥

तिलोत्तमा ॥४६७॥

भालान्तरायातललल्ललन्तिका-
मुक्तं[1] मुखं भात्यमितोऽलकाकुलम् ।
अब्बिन्दुवत् षट्पदशोभिपद्मवद्
यस्याः शिवायास्तु तिलोत्तमेति सा ॥६७॥

---

१. मुक्ताफलम् ।

लज्जा ॥४६८॥

कुलाङ्गनास्त्वत्सहिताः सुशोभाः
शोभोज्झिता अप्यवमानिनो यत्।
शोभासि किं तत् किमु वास्यशोभा
लज्जा न जाने परमेश्वरी त्वम् ॥६८॥

रसवती ॥४६९॥

आपातरसदोऽप्यन्तरसदो विषमो भवः।
रसमात्रावशेषः स्याच्चेत् स्याद्रसवती दया ॥६९॥

नन्दा ॥४७०॥

तत्पार्श्वस्थानतस्तस्य दृष्ट्या वाचा च नन्दिताः।
कथं न स्युर्जनाः सर्वे येन नन्दा समर्चिता ॥७०॥

भवानी ॥४७१॥

जपन् पूजयंस्त्वां भवानीति मुख्यां
भवाभावभावेषु संभावयन् वा।
भवं दुर्भवं तत्क्षणाद्याति हित्वा
भवत्वं नवानन्दराशिं सुचित्रम् ॥७१॥

पापनाशिनी ॥४७२॥

पापापापमयं पापं दुरापं कृपयास्ति नः।
यदीयया शिवा सेयं कीर्तिता पापनाशिनी ॥७२॥

---

१. जनाः। २. विशदः। ३. भवस्य संसारस्य अभावेषु भावेषु। ४. जन्म। ५. शिवत्वम्।

पट्टाम्बरधरा ॥४७३॥

गजचर्माम्बराङ्कस्था पट्टाम्बरधरा शिवा ।
नीलोत्पलेन्दुपासक्ता पद्मिनीव विराजते ॥७३॥

गीतिः ॥४७४॥

मृगाः खगा नागवराश्च भावं
स्वीयं सुविस्मार्य समाधिभाजः ।
निशम्य यामेव भवन्ति यत् त-
न्न कस्य गीतिः प्रियतावहास्ति ॥७४॥

सुगीतिः ॥४७५॥

रीत्योत्थानं प्रापिता भक्तवर्यै-
र्भीत्यादिं या भावमन्तं नयन्ती ।
चित्ते दत्ते कांचिदानन्दलीलां
स्फीर्तिं बुद्धेः सा सुगीतिर्ददातु ॥७५॥

ज्ञानलोचना ॥४७६॥

कालाध्वविप्रकृष्टत्वं प्रकृष्टानन्दिनीक्षते ।
मुषित्वा याखिलानर्थान् सा देवी ज्ञानलोचना ॥७६॥

सप्तस्वरमयी तन्त्री ॥४७७॥

स्वरा मनोहरा यत्र प्रत्येकं सप्तकोटिगाः ।
सप्तस्वरमयी तन्त्री स्वातन्त्र्यं श्रावयत्वियम् ॥७७॥

षड्जमध्यमधैवता ॥४७८॥

यादौ सप्तस्वरेष्वेका मध्ये स्फुरति धैवता ।
उपान्ते च मता सेयं षड्जमध्यमधैवता ॥७८॥

मूर्च्छना ग्रामसंस्थाना ॥४७९॥

निश्चला या त्रिधा बद्धा स्वरान् सप्त सुचश्चलान् ।
विश्रामयत्यसौ ग्रामसंस्थाना मूर्च्छना मता ॥७९॥

स्वस्था ॥४८०॥

परो यस्यां सदा तिष्ठत्यात्मा यस्याः परत्र च ।
सा देवी प्रथिता स्वस्था क्रियात् स्वस्थं मनो मम ॥८०॥

स्वस्थानवासिनी ॥४८१॥

बहुत्वं यान्त्यपि स्वीयं स्थानं स्वाभासितं सितम् ।
न जहाति यतस्तस्माच्चितिः स्वस्थानवासिनी ॥८१॥

अट्टाट्टहासिनी ॥४८२॥

यद्धासेन दिनं रात्रिरिव चन्द्रविकासिना ।
शोभते क्षोभमट्टाट्टहासिनी सा व्यपोहताम् ॥८२॥

प्रेता ॥४८३॥

जाग्रत्सुप्तसुषुप्तताः स्फुटतरं यान्ती च नो याति या
कौमारादिदशां गतापि विमलानन्दैव योज्जृम्भते ।
अन्त्यैः कर्मभिरीश्वरीं सुकृतिनो यां तर्पयन्ति ध्रुवं
प्रेता प्रेतपुराभियानजमियं शोकं दहत्वद्भुता ॥८३॥

प्रेतासननिवासिनी ॥४८४॥

प्रेतनाथाः शिवोत्तुङ्गपर्यङ्कं स्तम्भवत् स्थिताः ।
यस्या वहन्ति सा काचित् प्रेतासननिवासिनी ॥८४॥

नृत्तगीतप्रिया ॥४८५॥

दृष्यास्सगन्धर्वसुराङ्गनाद्या
आतोद्यमादाय सुतोषयन्ति ।
यां देवदेवीमिह नृत्तगीत-
प्रिया श्रिया पोषयतु स्वया नः ॥८५॥

अकामा ॥४८६॥

यत्रैव यत्रैव मनो निमग्नं
स्वस्वप्रिये शाङ्करि यस्य यस्य ।
तत्रैव तत्रैव च तस्य तस्य
त्वच्चैव यच्छाति ततोऽस्यकामा ॥८६॥

तुष्टिदा ॥४८७॥

यद्दयावहमतिर्यथा तथा
विग्रहं वहति भारवज्जनः ।
उज्झति क्षणात एव तं तया-
प्युज्झितो हृदि सदास्तु तुष्टिदा ॥८७॥

पुष्टिदा ॥४८८॥

मीयते केन सा देवी सुधियापि शिवात्र या ।
केन केनासि रूपेण कस्मै कस्मै न पुष्टिदा ॥८८॥

अक्षया ॥४८९॥

स्वस्वकाले प्रयान्त्येव क्षयं यत्नयुता अपि ।
त्वमेवैका तु सद्रूपा स्वभावेन चिदक्षया ॥८९॥

निष्ठा ॥४९०॥

वदन्तु बोधं बहवोऽपि वेद-
वेदान्तपाठेन नतु स्वरूपम् ।
जानन्ति तावत् परहर्षसिन्धुं
निष्ठा कृपां यावदियं न धत्ते ॥९०॥

सत्यप्रिया ॥४९१॥

आराध्य यां सत्यसुतो[1] नसत्यान्
रिपूञ्जघानापि चचाल नैव ।
सत्यात् स्वकीयात् प्रथितैककीर्त्तिः
सत्यप्रिया सा प्रियमातनोतु ॥९१॥

प्रज्ञा ॥४९२॥

यस्य यस्य प्रसन्ना त्वं प्रज्ञा परमदेवता ।
तस्य तस्य कथं नाज्ञां वहन्ति शिरसीतरे ॥९२॥

लोकेशी ॥४९३॥

वश्या यस्याः सन्ति देशा अशेषाः
कर्तुं हर्तुं पातुमप्येकदेशम् ।
यातायाः सालोकमात्रेण भक्तं
लोकेशी मां शोकहीनं करोतु ॥९३॥

सुरोत्तमा ॥४९४॥

स्वस्वदेशेऽष्टधा सर्गं सुराणां पाति या परा ।
सुरोत्तमा करोत्वेनं सर्वोत्तमगतिं जनम् ॥९४॥

---

१. युधिष्ठिरः ।

सविषा ॥४९५॥

दृष्ट्वैव यामृतानन्दं भक्तानां जनयत्यसौ ।
सविषा नाममात्रेण जाने डित्थडवित्थवत् ॥९५॥

ज्वालिनी ॥४९६॥

येनावृतात्मो न परात्मभावं
वेत्त्येष तन्मोहतमः क्षणेन ।
निहन्ति दृष्ट्वैव दयानिधिर्या
सा ज्वालिनी कालभयं हरास्य ॥९६॥

ज्वाला ॥४९७॥

दशधा प्रविभज्यात्मस्वरूपं या त्रिवह्निषु ।
जाज्वलीति[1] स्थितैकैव ज्वाला सा बलदास्तु नः ॥९७॥

विषमोहार्तिनाशिनी ॥४९८॥

अन्वाजाद्यसहोष्मापि यदासङ्गान्महाविषम् ।
मृत्युजित् पशुपः सेयं विषमोहार्तिनाशिनी ॥९८॥

विषारिः ॥४९९॥

स्वपतेर्नीलकण्ठत्वक्रिययेव समत्सरा ।
विषाशनेन संवृत्ता विषारिः सापि विश्वसूः ॥९९॥

नागदमनी ॥५००॥

महार्हाभूषणा स्वेन नागभूषणसङ्गतः[2] ।
सलज्जेवास्ति सा नागदमनी शक्तिरैश्वरी ॥१००॥

---

१. अत्यर्थं ज्वलति । २. शिवः ।

स्वस्वातन्त्र्यपरानुभूतिकलयावश्यंभवित्र्योद्गते
साहिब्कौल इति प्रथावति पदे निर्माति यः सासनम् ।
तत्काव्ये चरणादियातयमकं श्रीचन्द्रमौलिस्तवं
भ्रातृत्वेन समागतेऽत्र दशमी भक्तिर्विरामं गता ॥१०१॥

इति श्रीमहामाहेश्वराचार्यवर्यसाहिबकौलानन्दनाथविरचिते
नामविलासे महाकाव्ये दशमी भक्तिः ॥१०॥

# एकादशी भक्ति

कुरुकुल्ला ॥५०१॥

कुरुकुल्ला जयत्येषा या ध्याता कुरुते जनम् ।
कुलाकुलपरिज्ञानदाक्षिण्यप्रथितोदयम् ॥१॥

अमृतोद्भवा ॥५०२॥

भवभोगरसाक्तापि[1] जीवन्मुक्तो यदीयया ।
दयया भक्तवर्योऽयं सा जीयादमृतोद्भवा ॥२॥

भूतभीतिहरा रक्षा ॥५०३॥

सत्यं सास्ति स्वतन्त्रा तद्भूतपाङ्गतापि[2] यत् ।
भूतभीतिहरा रक्षा स्वयं सा परमेश्वरी ॥३॥

भूतावेशविनाशिनी ॥५०४॥

सम्भूतपूर्वपुण्यानां भूतावेशविनाशिनी ।
भूयाद् भूतिप्रदा देवी भूताहन्तानिवारिणी ॥४॥

---

१. रसभक्षकोऽपि । २. शिवाङ्गगता सती अपि ।

रक्षोघ्नी ॥५०५॥

मर्त्यो रामो वानरेन्द्रैः सनाथः
पौलस्त्यं तं राक्षसानां बलेशम् ।
अब्धिं तीर्त्वा यत्कृपातो जघान
रक्षोघ्नी सा कस्य मान्या न माता ॥५॥

राक्षसी ॥५०६॥

या तानि तानि जनयत्यबला बलेश-
रक्षांस्यनेकविधरूपयुतानि चैका ।
देवोत्तमादिविजयीनि पराधिदेवी
सा राक्षसी हरतु राक्षसजं भयं नः ॥६॥

रात्रिः ॥५०७॥

या हन्त संगमयते सुसमाधिलक्ष्म्या
योगेश्वरानपि च भोगधनान् प्रियाभिः ।
काव्यज्ञमर्थकलया पथिकप्रियाः स्वैः
स्वप्नागतैः प्रियतमैः सुखदास्तु रात्रिः ॥७॥

दीर्घनिद्रा ॥५०८॥

यथा ब्रह्मतामाप्य भूयो निवृत्ति-
र्भवे नो भवेज्जातुचिद्यां तथैव ।
मुधाजातमानादिभावैकहर्त्री
शिवा दीर्घनिद्रा परानन्ददास्तु ॥८॥

दिवागतिः ॥५०९॥

अर्थेषु भूयो निशि विस्मृतेषु
प्रतिस्वमाप्नोति यया प्रचारम् ।
जनो मनस्त्राणदया दयातो
दिवागतिः सास्तु शिवा गतिर्नः ॥९॥

चन्द्रिका ॥५१०॥

त्वय्यपि प्रथितलाञ्छनोऽपि यद्
ग्लौरपीह भविनां तमीप्रियः ।
चञ्चलोऽस्ति च तथापि चन्द्रमः[1]-
श्चन्द्रिकाश्रयभवो गुणो ह्ययम् ॥१०॥

चन्द्रकान्तिः ॥५११॥

रोदितीव निशि सुप्तताजितं
लोकमन्तकगृहाभिसज्जितम् ।
स्वं च वीक्ष्य विगलत्सुधामयं
चन्द्रकान्तिरिह मुद्रितात्मवाक् ॥११॥

सूर्यकान्तिः ॥५१२॥

दुष्टमेत्यपि तमः पुनः पुनः
सर्वदा तव हतं मयाज्ञया ।
सक्रुधेति गदितेव भानुना
सूर्यकान्तिरभितो ज्वलत्यसौ ॥१२॥

---

१. चन्द्रं कर्पूरं माति तुलां याति ।

निशाचरी ॥५१३॥

मायानिशि स्वप्नगतैरलक्ष्या
या लीलया कापि चरत्यसङ्गा ।
निशाचरीति प्रथिताद्भुता सा
सदैव वो बोधयतु स्वभासा[1] ॥१३॥

डाकिनी ॥५१४॥

विकल्पसंकल्पनिदानमेत-
द्धरत्यहो या हृदयं जडानाम् ।
अलक्ष्यचेष्टाप्यनिवार्यचर्यं
दुर्लक्ष्यमेषा किल डाकिनीति ॥१४॥

शाकिनी ॥५१५॥

दिगम्बरा दिक्षु वरा अजस्र-
माराध्य यां यान्ति शिवत्वमीड्यम् ।
भूताधिवासाः कृतकर्मनाशाः
सा शाकिनी नाकविहारदास्तु ॥१५॥

शिष्या ॥५१६॥

सर्वे सर्वं यतोऽधीत्य गुरुतां प्राप्नुवन्त्यहो ।
कस्य सापि किमर्थं नु शिष्या भूता महेश्वरी ॥१६॥

हाकिनी ॥५१७॥

नानौषधादिविधिमप्यधिकं विदित्वा
हस्तक्रियामपि समाप्य गुरोर्न तावत् ।

१. ख. 'स्वभावा' पाठः ।

सिद्धिं रसायनभवां लभतेऽपि धीरो
यावद्‌दयां वितनुते नहि हाकिनी सा ॥१७॥

चक्रवाकिनी ॥५१८॥

मायानिशा यतो नाम्नं जातुचित् स्पृशतीश्वरीम् ।
तटेषु सर्वदा तस्माच्छोभते चक्रवाकिनी ॥१८॥

सितासितप्रिया ॥५१९॥

सितासितप्रिया न स्याद्यदि भूतिसितस्य तत् ।
नीलकण्ठस्य देवेशी कुर्यादङ्गीकृतिं कथम् ॥१९॥

स्वङ्गा ॥५२०॥

चकार यानङ्गरिपुं निजाङ्गनिर्भङ्गसङ्गं श्रितकामरङ्गम् ।
अहो महोमूर्तिरवेत्तितैव स्वङ्गास्तु सर्वाङ्गसुपोषणीयम् ॥२०॥

सकला ॥५२१॥

यत आविर्भवन्त्येताः काले कालेऽखिलाः कलाः ।
सकला कलया पायादपायात् कालभीतिजात् ॥२१॥

वनदेवता ॥५२२॥

वने वने या कुरुते विहारं सम्पूजिता मूलफलैरनल्पैः ।
वन्यैर्जनैर्दुष्कलिकल्मषघ्नी संकीर्तिता सा वनदेवतेति ॥२२॥

गुरुरूपधरा ॥५२३॥

बाला इवाखिला लोका भवेयुः क्लेशभागिनः ।
क्रियासु यदि न त्वं स्या गुरुरूपधरा सदा ॥२३॥

गुर्वी ॥५२४॥

गुर्वादिभ्योऽपि या गुर्वी कथं तां भक्तिभागिनः ।
वहेयुश्चेतसा तस्या एव स्यान्न दया यदि ॥२४॥

मृत्युः ॥५२५॥

केन केनास्ति रूपेण कस्य कस्यान्तकारिणी ।
मृत्युर्या सा शिवा देहमानमृत्युप्रदास्तु नः ॥२५॥

मारी ॥५२६॥

ब्रह्मा कथं कथमपि प्रभुरद्भुतं य-
दुत्पादयत्ययुगपद्युगपत् तदेतत् ।
या मारयत्यमरचिन्त्यसमागमा सा
मारीश्वरी परमतोषमियं ददातु ॥२६॥

विशारदा ॥५२७॥

देहेन गेहेन च संश्रयोऽपि
लक्ष्म्या नरो वीररसोद्धतोऽपि ।
अधीतविद्योऽपि मृगो हि ताव-
द्यावत् प्रसन्ना न विशारदा त्वम् ॥२७॥

महामारी ॥५२८॥

महामारी महादेवी महत्तत्त्वाद्यनात्मजाम् ।
नानाभिमानदुर्बाधां तुष्टा मारयतु ध्रुवम् ॥२८॥

विनिद्रा ॥५२९॥

या योगिभिः पश्चिमरात्रकाले
या भोगयोगैरपि पूर्वरात्रे ।

वियोगिभिर्यापि सदैव चैका
संसेव्यते साऽस्तु हिता विनिद्रा ॥२९॥

तन्द्रा ॥५३०॥

तन्द्रादेवीध्याननिर्धौतपापाः
सान्द्रानन्दोत्तर्जितेन्द्रादिपद्माः ।
मन्द्रं मन्द्रं निर्मलं नाम तस्या
गायन्तस्ते साधु सन्तो जयन्ति ॥३०॥

मृत्युविनाशिनी ॥५३१॥

सर्वत्र सर्वदा सार्वा सर्वथापि व्यथापहा ।
सतां भक्तिमतां भूयाद्देवी मृत्युविनाशिनी ॥३१॥

चन्द्रमण्डलसंकाशा ॥५३२॥

चन्द्रमण्डलसंकाशा भाति यैकाप्यनेकधा ।
तरङ्गेष्विव देहेषु सा शिवास्तु शिवाय नः ॥३२॥

चन्द्रमण्डलवासिनी ॥५३३॥

सर्वदापि महेशानी चन्द्रमण्डलवासिनी ।
निष्कलङ्का परं पूर्णा जयत्येषैव काचन ॥३३॥

अणिमादिगुणोपेता ॥५३४॥

हृदि खे पवने मह्यामहंचिज्जीवबुद्धिषु ।
अणिमादिगुणोपेता स्वयंसिद्धा जयत्यसौ ॥३४॥

---

१. सर्वेभ्यो हिता ।

सुस्पृहा ॥५३५॥

विवर्तेत कथं ब्रह्म शुद्धबुद्धं जगत्तया[1] ।
भवेस्त्वं परमेशानी सहाया सुस्पृहा न चेत् ॥३५॥

कामरूपिणी ॥५३६॥

अमराधिपताभिमान इन्द्रो
हरिरेतस्य च रक्षकाभिमाने ।
विधिहानिमदे ययात्र केशौ
विनियुक्ता अपि कामरूपिणी सा ॥३६॥

अष्टसिद्धिप्रदा ॥५३७॥

शुद्धबुद्ध्येकभक्तेभ्यो महेशानी विना हठम् ।
दुर्घटं सततं भूयादष्टसिद्धिप्रदात्र नः ॥३७॥

प्रौढा ॥५३८॥

स्वभावगम्भीरविचित्रचित्रकलानिधानं परमेश्वरीयम् ।
उपोढसर्वंसहशान्तभावा प्रौढा मनःप्रौढिकरी ममास्तु ॥३८॥

दुष्टदानवघातिनी ॥५३९॥

कानने गहने मार्गवैषम्ये निम्नगोत्तरे ।
स्मृता सुखकरी भूयाद् दुष्टदानवघातिनी ॥३९॥

अनादिनिधना पुष्टिः ॥५४०॥

अनादिनिधना पुष्टिर्जगदाद्यन्तसाक्षिणी ।
अनाद्यविद्यासंक्षोभहारिण्यस्तु ममेश्वरी ॥४०॥

---

१. जगतो भावेन ।

चतुर्बाहुः ॥५४१॥

ऊर्ध्वं शङ्खं स्वकरकमले धारयन्त्यप्यधस्ताद्
वामे चक्रं जलजनिगदे दक्षिणे च क्रमेण ।
खेलन्ती या प्रहरणविधौ चातुरीरीतिमाप्ता
देवी भूयात् प्रकृतसुखदा सा चतुर्बाहुरेषा ॥४१॥

चतुर्मुखी ॥५४२॥

एकं परिणतं ब्रह्म चतुर्धा ब्रह्मरूपभृत् ।
या गायति परा तज्ज्ञैर्गीयते सा चतुर्मुखी ॥४२॥

चतुःसमुद्रशयना ॥५४३॥

यद्दयामाप्य जात्वेव शेत एकाम्बुधौ हरिः ।
चतुःसमुद्रशयना मीयते केन सा शिवा ॥४३॥

चतुर्वर्गफलप्रदा ॥५४४॥

संतुष्टा कृतबुद्धीनामिष्टा विविधकर्मभिः ।
जयत्येकैव सा देवी चतुर्वर्गफलप्रदा ॥४४॥

काशपुष्पप्रतीकाशा ॥५४५॥

काशपुष्पप्रतीकाशा काशते या महेश्वरी ।
चिदाकाशप्रथा सास्तु निराशत्वाभिदार्ढ्यकृत् ॥४५॥

शरत्कुमुदलोचना ॥५४६॥

यदपाङ्गाग्रयातोऽयं भवेत् सर्वाङ्गसुन्दरः ।
ददातु सा मुदं शुद्धां शरत्कुमुदलोचना ॥४६॥

---

१. पद्मं गदां च । २. वेदम् ।

भूता ॥५४७॥

या वेद वेदं निखिलं न जातु
वेदोऽपि यां वेद विदं[1] विधिर्वा ।
भूतेति गीता परमेश्वरीयं
ददातु भूतं सततं स्वबोधम् ॥४७॥

भव्या ॥५४८॥

संभाविता येन हृदेह भव्या
भवे भवे तस्य भवेत् किमन्यत् ।
भव्यं स्वभावेन विघूर्णितस्य
भव्यं न वानन्दरसेन पुंसः ॥४८॥

भविष्या ॥५४९॥

अधीत्य वेदानखिलानजोऽपि
पुनः पुनः सोऽप्यवतीर्य विष्णुः ।
न शक्नुतः खेलनमत्र यस्या
निर्णेतुमेषास्तु हिता भविष्या ॥४९॥

शैलजा ॥५५०॥

कर्मबीजमिदमेव भूतलं
श्लाघ्यमत्र च हिमाचलस्ततः ।
संकटाध्ववितोऽपि यच्छिवा
शैलजास्ति विमलैक्यहर्षभूः ॥५०॥

---

१. चेतनाम् । अथवा वेदविदं वेदज्ञां वेदेति पूर्वेण अन्वयः ।

शैलवासिनी ॥५५१॥

देवाः सर्वे ततः स्वं स्वमकार्षुः स्थानमद्रिषु ।
दृढं देवादिदेवी यत्स्वयं सा शैलवासिनी ॥५१॥

वाममार्गरता ॥५५२॥

क्षणाद् वशीभवन्त्यस्य योगेनापि सुदुर्लभाः ।
सिद्धयः सेविता येन वाममार्गरता हिता ॥५२॥

वामा ॥५५३॥

तं वामनेत्रा विहतान्यकामाः
कामातुराः सामकथाविदग्धाः ।
भजन्ति गायन्ति च रामयन्ति
वामा शिवा यस्य सदैव वामा ॥५३॥

शिववामाङ्गवासिनी ॥५५४॥

येयं देवी पराख्याता शिववामाङ्गवासिनी ।
सैवेह सर्वदा भाति मम सर्वाङ्गवासिनी ॥५४॥

वामाचारप्रिया ॥५५५॥

सर्वेऽन्तं यान्ति शम्भुस्तु यत्कृपातोऽन्तकान्तकः ।
कलौ सैव कथं पूज्या वामाचारप्रिया जडैः ॥५५॥

तुष्टा ॥५५६॥

आप्त्वापि मानवं देहं दुर्लभं सुलभं न ये ।
तुष्टाः स्वात्मावबोधेन ते तुष्टाकृपयोज्झिताः ॥५६॥

लोपामुद्रा ॥५५७॥

वीजैर्जप्ता दशभिरतुला पञ्चमिश्रैस्तनोति
तज्ज्ञानां या हृदयविशदाकाशकोशे समन्तात् ।
कांचिद् हर्षप्रथमलहरीकौमुदीं सेव्यते सा
लोपामुद्रा कथमिह परं मुद्रितस्वान्तमर्त्यैः ॥५७॥

प्रबोधिनी ॥५५८॥

ब्रह्मादिलोकस्थितिमप्युपेक्षे
देहेन मर्त्योऽपि तृणोपमं यत् ।
सदैव सोऽयं मम कामवन्ध्यः
प्रबोधिनीध्यानभवः प्रभावः ॥५८॥

भूतात्मा ॥५५९॥

पूर्वं मध्यगतं न कोऽपि यमलं यस्या विवेक्तुं ततो-
प्येकानेकनिरन्तचारुरचनो भूतव्रजोऽयं स्वतः ।
यस्या आविरभूत् तथाप्यवितथानन्दैव यैका चिंति-
र्भूतात्मेति शिवा विभूतिमतुलां स्वीयां ददातु ध्रुवम् ॥५९॥

परमात्मा ॥५६०॥

अतिचित्रविचित्रशास्त्रपूगं
विरचय्यापि च शक्यते विवेक्तुम् ।
मुनिभिर्न हि यद्दयां विना या
परमात्मेति शिवा प्रकीर्तिता सा ॥६०॥

---

१. ब्रह्मापि । २. क. ख. घ. 'भोगं' पाठः ।

भूतभाविविभाविनी ॥५६१॥

त्वमेवाद्यन्तहीना यद् भूतभाविविभाविनी ।
अतोऽन्यः कः सदाद्यन्तस्त्वां विभावयितुं क्षमः ॥६१॥

मङ्गला ॥५६२॥

यात्राविवाहादिषु यां प्रपूज्य
निरुत्तमां सिद्धिमुदारसत्त्वाः ।
संप्राप्नुवन्ति प्रथितेह काचित्
सा मङ्गलास्त्वस्य सदा सहाया ॥६२॥

सुशीला ॥५६३॥

संहारकर्तुः पशुपस्य भीम-
रूपस्य सर्वज्ञकलाचितस्य ।
अपि प्रिया त्वं कथमीश्वरि स्याः
स्वयं सुशीला यदि नाभविष्यः ॥६३॥

परमार्थप्रबोधिका ॥५६४॥

सदैव मे मनोगास्तु परमार्थप्रबोधिका ।
यदाप्त्या भ्रामकानन्यानर्थान्न जानामि शष्पवत् ॥६४॥

दक्षिणा ॥५६५॥

ददास्यभीप्सितां सिद्धिं हेलयापि समर्चिता ।
यतस्ततस्तत्प्रज्ञैर्दक्षिणेति प्रकीर्त्यसे ॥६५॥

---

१. सन्तावाद्यन्तौ यस्य । २. 'प्रकीर्तिता' क. ख. ।

दक्षिणामूर्तिः ॥५६६॥

शिवाब्धिमध्यादुदयं प्रयाता-
नानङ्क्ष या मन्त्रमणीननन्तान् ।
नानागमैः संस्क्रियया वतीर्णा
सा दक्षिणामूर्तिरिति प्रसिद्धा ॥६६॥

सुदक्षिणा ॥५६७॥

ज्ञानेन कंचित् तपसापि कंचि-
द्योगेन कंचित् क्रिययापि कंचित् ।
भक्त्यापि यद्रञ्जयसीह कंचित्
सत्यं ततो देवि सुदक्षिणासि ॥६७॥

हरिप्रिया ॥५६८॥

नारीशतरतासक्तो हरित्वेन प्रसिद्धिभाक् ।
शौरिर्यद्दयया देवी कीर्तिता सा हरिप्रिया ॥६८॥

योगिनी ॥५६९॥

णसंयमनतत्परा परा या हृषीकविषयापराजिता ।
गशोकविनिवर्तिताशया योगिनी सुभगयोगदास्तु सा ॥६९॥

योगयुक्ता ॥५७०॥

समस्तमपि च व्यस्तमाभास्याध्यासमात्मनः ।
चिदानन्दैव यन्नित्यं योगयुक्ता ततः स्वतः ॥७०॥

१. संसारे आत्मारोपः ।

योगाङ्गा ॥५७१॥

एकैकाङ्गैनैकमेकं ददाति सम्यक् सिद्धैर्वैभवं या भवानी ।
आपन्नानामापदन्तैकहेतुर्योगाङ्गेयं कीर्तिता योगिनाथैः ॥७१॥

ध्यानशालिनी ॥५७२॥

विशिष्टमवशिष्टं तत् किंस्वित् सुस्पष्टवैभवा ।
सर्वध्येयापि सर्वासि त्वं यस्य ध्यानशालिनी ॥७२॥

योगपट्टधरा ॥५७३॥

स को योगोऽस्ति नो जाने यं खिन्नेव विधाय मा ।
योगपट्टधरा भूता चित्रं योगेश्वरीश्वरी ॥७३॥

मुक्ता ॥५७४॥

संस्पृशन्ति कदाचिन्न त्रिगुणा यां यथा जलम् ।
पद्मपत्रं जयत्येषा मुक्ता निःस्पृहसंस्पृहा ॥७४॥

मुक्तानां परमा गतिः ॥५७५॥

कीदृशीयं महादेवी मुक्तानां परमा गतिः ।
यामगत्वैव कुत्रापि प्राप्नुवन्ति विचक्षणाः ॥७५॥

नारसिंही ॥५७६॥

एकं[1] मृत्या परं[2] लक्ष्म्या याकरोत् पूर्णसंगरौ[3] ।
विरोध्याराधिनौ भक्तौ नारसिंहीति सा शिवा ॥७६॥

सुजन्मा ॥५७७॥

जन्माप्य रामादिरपीह यातो
यत् प्राकृतत्वं भवती सती तु ।

१. हिरण्यकशिपुम् । २. विष्णुम् । ३. पूर्णप्रतिज्ञौ ।

सदैव नैसर्गिकहर्षरूपा
सर्वत्र तत् त्वं प्रथिता सुजन्मा ॥७७॥

त्रिवर्गफलदायिनी ॥५७८॥

तत् किं चित्रं गृहस्थानां त्रिवर्गफलदायिनी ।
यत् त्वं चित्रं महत् तत्तु मुक्तानामपि यत्तथा ॥७८॥

धर्मदा ॥५७९॥

गुणोऽपि धर्मोऽपि मतोऽपि धर्म
एकं तयोर्यद् द्यसि[1] वा ददासि ।
परं ततो देवि महेश्वरी त्वं
सर्वस्य मान्या किल धर्मदासि ॥७९॥

धनदा ॥५८०॥

धनदासि यदि त्वमीशि तादृग्
धनमीशानि दयां विधाय देहि ।
नहि यस्य नृपादितो भयं स्या-
न्नच सर्गादिषु[2] यत् सुकष्टरूपम् ॥८०॥

कामदा ॥५८१॥

सदसन्तावुभौ[3] यत्र जयस्तत्रेति निश्चितम् ।
अर्धाङ्गशम्भुर्यत् त्वं च द्विधा जयसि कामदा[4] ॥८१॥

१. खण्डयसि । २. उत्पादने रक्षणे व्यये च । ३. संश्च असंश्च, तौ । ४. कामं द्यति मारयति, काममभिलाषं ददाति वा,—इति द्विधात्वम् ।

मोक्षदा ॥५८२॥

मोक्षदासि किल शैवशासने
मोक्षदासि परशासनेष्वपि ।
सा द्विधापि मम संमतासि यत्
तत् क्व सोऽस्मि सतताधिकारवान् ॥८२॥

द्युतिः ॥५८३॥

दे[1]व्यः परं भोगविनाकृतेहा
नागस्त्रियो वापि भयानकाभिधाः ।
नार्यश्चलद्यौवनदर्पकाः स्युः
काम्याः कथं चेन्न दयाकरी द्युतिः ॥८३॥

साक्षिणी ॥५८४॥

त्रि[2]धा विधायेशम[3]जं समस्तं
व्यस्तं च जीवं कृतकाम्यलीलम् ।
अनेकवत् पश्यति या स्वमेकं
साक्षान्निराख्या किल साक्षिणी सा ॥८४॥

क्षणदा ॥५८५॥

मायाविभिन्नात्मविदः सदैव
कुकार्यसक्ताः क्षणमेककं वा ।
विश्राममेते कथमाप्नुयुश्चेत्
कृपाकरी न क्षणदा शिवा स्याः ॥८५॥

---

१. देवानां स्त्रियः । २. वेदान्तमतेन ईश्वरसूत्रात्मविश्वभेदेन प्राज्ञतैजसवैश्वानरभेदेन च,—इति त्रिधात्वम् । ३. अजमात्मानं समस्तं व्यस्तं समष्टिव्यष्टिभेदेन ।

दक्षा ॥५८६॥

बह्वात्मजो[1]ऽनादरकृत् प्रजेशो
दक्षोऽप्यविज्ञाततदीयशक्तिः ।
विधिं विधाय च्छलितस्तया यद्
दक्षा तदन्या कतमा तदस्ति ॥८६॥

दक्षजा ॥५८७॥

जातमात्रैव दक्षात् त्वं तस्य स्वात्मजताकरी ।
न तु यस्मात् ततः सत्यं दक्षजासि जगत्प्रसूः ॥८७॥

कोटिरूपिणी ॥५८८॥

ध्यायन् ध्यायन् सदा कोटिरूपिणीति महेश्वरीम् ।
कोटिरूपित्वमाप्तः सन्नेकोऽस्म्यद्यापि निश्चितम् ॥८८॥

क्रतुः ॥५८९॥

यामनाहूय दक्षोऽपि क्षणेनैव विना[2]कृतः ।
अभूत् सम्भारनी[3]व्यापि क्रतूनामपि सा क्रतुः ॥८९॥

कात्यायनी ॥५९०॥

गत्या गजस्यापि गुरुत्वकर्त्री
मत्यापि जीवो[4]ष्महरीश्वरीयम् ।
धृत्या हरिं चापि जयन्त्यपायात्
कात्यायनी पातु कृतान्तसिद्धात् ॥९०॥

---

१. बहुदुहितृकः । २. रहितः । ३. मूलधनेन । ४. बृहस्पतेरूष्माणमहङ्कारं हरति तादृशी ।

स्वच्छा ॥५९१॥

जीवन्नेव क्षीरवद् भिन्न
जाने भावं नैव यत्तामवाप्तः ।
सर्वाहारोऽप्यस्म्यलेपश्च सेयं
स्वच्छा तुच्छाहन्त्वहर्त्री तवास्तु ॥९१॥

स्वच्छन्दा ॥५९२॥

ऐक्यं नैक्यं साधितं वा कथाभिः
कस्मिंस्तीर्थे केन मात्रा कथं वा ।
स्याच्चि पा रूपनामोज्झिता चेत्
स्वच्छन्दा स्या नात्मनाद्वैतगम्या ॥९२॥

कविप्रिया ॥५९३॥

कवयन्ति सुवाग्विलासलास्य-
क्षणलुब्धा इव भूरिशः कवित्वा ।
कवयितृत्वमिहास्य तु स्वसिद्धं
प्रथितं यो हि कविप्रियाप्रियः स्यात् ॥९३॥

सत्यागमा ॥५९४॥

स्वैश्वर्यमात्रं प्रकटं विधातुं
प्रत्येकमीशै रचिता भ्रमाय ।
बह्वागमास्त्वं तु सदैव सत्या-
गमाऽऽगमं निर्भ्रममातनोषि ॥९४॥

---

१. यस्या भावः । २. प्रमात्रा । ३. पठित्वा ।

बहिःस्था ॥५९५॥

परादिरूपा कृतभेदभेदा
कथं निरूप्या कृतिभिर्भवेस्त्वम् ।
न वैखरीरूपधरा यदा स्याः
सर्वैकधाराप्रसरा बहिःस्था ॥९५॥

काव्यशक्तिः ॥५९६॥

दृष्ट्वा शास्त्राण्यपि गुरुवरादन्वहं लोकरीति-
स्फीतेर्नीतिं सपदि विदितां चापि कृत्वात्मबुद्ध्या ।
तावज्ज्ञेयात् पदपदगतं सद्रसं तं कथंस्विद्
यावन्नैषा विलसति निजे चित्तखे काव्यशक्तिः ॥९६॥

कवित्वदा ॥५९७॥

कवित्वदा त्वं किल चेत्तदा मे
शास्त्रादिकाभ्यासमपास्य सम्यक् ।
काव्यं तदीशेश्वरि देहि यत्त-
च्छ्रुत्वामनाः स्यात् सुमनोगणोऽपि ॥९७॥

मेनापुत्री ॥५९८॥

मैनाकपुत्रस्य यदापि मेना
दृष्ट्वापि दूरे गमनं न दुःखम् ।
त्वामाप्य तृप्ता सततं हि मेना-
पुत्री ततस्त्वं प्रथिताप्यजासि ॥९८॥

सती माता ॥५९९॥

विधिना विहितां सृष्टिं सहेत स हरः कथम् ।
विलासैः स्वैः सती माता कुर्यास्तं विस्मृतं न चेत् ॥९९॥

मैनाकभगिनी ॥६००॥

शक्तिः शम्भोः प्रिया सेनापतेर्गणपतेरपि ।
जनस्य जननी भूयान्मैनाकभगिनी श्रिये ॥१००॥

स्वस्वातन्त्र्यपरानुभूतिकलयावश्यंभवित्र्योद्गते
साहिब्कौल इति प्रथावति पदे निर्माति यः सासनम् ।
तत्काव्ये चरणान्तयातयमकं स्वं सुप्रभातस्तवं
सोदर्यं कलयत्यमुत्र विरतिं भक्तिर्भवाङ्कागमत् ॥१०१॥

इति श्रीमहामाहेश्वराचार्यवर्यसाहिबकौलानन्दनाथविरचिते
नामविलासे एकादशी भक्तिः ॥११॥

---

# द्वादशी भक्तिः ।

तडित् ॥६०१॥

वीक्ष्य यद्रुचिमनुत्तमां क्षणं
हर्षवानिव रसत्यरं पुनः ।
रोदितीव जलदः क्वचिद्गतां
यामियं द्रढयतात् सुखं तडित् ॥१॥

सौदामिनी ॥६०२॥

प्रकाशमयविग्रहा भवति हन्त सौदामिनी
तमो वितनुते परं कथमियं यथा यामिनी ।
विलोक्य यदिमां क्षणं विरहिणी भृशं कामिनी
सुतापिततरान्तरा शयनसंश्रयागामिनी ॥२॥

स्वधामा ॥६०३॥

त्रैगुण्यमालिन्यहतास्त्रिदेवा
भासं जगद्भासकतां गताश्च ।
न यान्ति यस्याः पुरतः स्वकीयां
सा निर्गुणा स्वार्थकरी स्वधामा ॥३॥

सुधामा ॥६०४॥

अन्योन्यमर्कादि न जातु धाम
प्रयाति शोभां मिलितं कलाभिः ।
इयं तु सर्वाभिगता सदा य-
च्छोभावहा तत् प्रथिता सुधामा ॥४॥

धामशालिनी ॥६०५॥

निष्कामो वा सकामो वा रमते स सदा सुखम् ।
यस्येयं कृपया भूता प्रसन्ना धामशालिनी ॥५॥

सौभाग्यदायिनी ॥६०६॥

सौभाग्यदायिनी सत्यं नतु दुष्टेन्द्रियं प्रति ।
सुभगोऽपि यतः सोऽयं लक्ष्यते दुर्भगो यथा ॥६॥

द्यौः ॥६०७॥

येयं देवी द्यौरिति श्रूयतेऽन्यैः
सा मे कामैर्हीनचित्तस्य भाति ।
सर्वत्रैव ब्रह्मबुद्धिप्रसादाद्
बाल्याद्यस्तं सच्छरीरं श्रितस्य ॥७॥

सुभगा ॥६०८॥

मन्मथोऽपि मनो हर्तुं सरतिर्न क्षमोऽभवत् ।
यस्य सोऽपि वशं नीतो यया सा सुभगेति सत् ॥८॥

---

१. अस्तं हीनम् ।

द्युतिवर्द्धिनी ॥६०९॥

विद्योतते जगत्सर्वं यदेकांशाभिसंश्रयात् ।
सदैव सा सहायास्तु देवता द्युतिवर्द्धिनी ॥९॥

श्रीः ॥६१०॥

साधोर्वाक्यसुधारसे सुललनासर्वाङ्गभङ्गीततौ
राज्ञां सर्वकलासु कालचरिते[1] नानातया स्फूर्जति ।
सर्वेष्वेव रसेषु या रसकलाचातुर्यचिन्तामणिः
सा श्रीः कांचिदुदारचित्तचरितश्लाघ्यां ददातु श्रियम् १०॥

कृत्तिवसना ॥६११॥

महार्हाम्बरशोभाढ्या इन्द्राद्याः प्रणमन्ति याम् ।
सा कृत्तिवसना वासं करोतु मम मानसे ॥११॥

कङ्काली ॥६१२॥

या प्रत्यङ्गं दीपमालोद्धताभि-
ज्वालाभिः संदग्धकालाभिरारात्[2] ।
खेलन्त्युच्चैः शोभते शून्यदेशे
कङ्कालीयं निर्भयं मां करोतु ॥१२॥

कलिनाशिनी ॥६१३॥

अकलितसहजाशयप्रसङ्गे
विदलितनिर्मलशास्त्रचारुरङ्गे ।

---

१. भूतभविष्यद्वर्तमानेषु प्रातर्मध्याह्नप्रदोषेषु वा । २. तन्त्रमतेन कङ्काल्या ज्वालाभिः कालो दग्धः ।

कथमुत निवसेत् कलौ दुरङ्गे
यदि न भवेत् कलिनाशिनीह सङ्गे ॥१३॥

रक्तबीजवधोद्भूता ॥६१४॥

दुर्लक्ष्यीकृतदुर्लक्ष्या प्रकृष्टत्रिविधायुधा ।
रक्तबीजवधोद्भूता जयत्येकैव सा द्विधा ॥१४॥

सुतन्तुः ॥६१५॥

यस्यां यथोचितं प्रोतं मणिमालातुलां गतम् ।
अद्भुतं जगदाभाति सुतन्तुस्तनुतां मतिम् ॥१५॥

बीजसन्ततिः ॥६१६॥

बीजमद्भुतकलं करोति या
निष्कलं विततया स्फुरत्तया ।
शोभितं प्रकटितं भिदाखिलं
सा श्रियेऽस्तु मम बीजसन्ततिः ॥१६॥

जगज्जीवा ॥६१७॥

यया शून्यं पूर्णं भवति सहसा व्याप्तमकलं
कलावद्दुर्ज्योतिर्विमलमनृतं सत्यमसुखम् ।
लसद्धर्षं सम्यग्जगदतिगदं दुर्विधमिदं
जगज्जीवा जीवं प्रकटयतु नो ब्रह्मविषयम् ॥१७॥

जगद्बीजा ॥६१८॥

स्वेच्छारसो भावफलो जगत्तरु-
र्हृषीकपुष्पः प्रकटीकृतो यया ।

---

१. रक्तबीजाभिधानराक्षसमारणात्, स्वात्मनि रक्तबीजग्रहणात् ।

चित्ताङ्कुरः कालकलाकुलो जग-
द्बीजास्तु सा मे विजयप्रदा सदा ॥१८॥

जगत्त्रयहितैषिणी ॥६१९॥

नानाग्राह्योपहारेण नानाग्राहकमत्र या ।
तर्पयत्यक्रमं सेयं जगत्त्रयहितैषिणी ॥१९॥

चामीकररुचिः ॥६२०॥

स्खलत्केशग्रन्थिप्रचलदमलामोदकुसुमा-
वकीर्णा या लीलालयमभिगता दीप्यतितराम् ।
शिवा दीप्राङ्गीव श्वसनचलिता चम्पकलता
न चित्तस्य स्फूर्त्यै प्रभवति न चामीकररुचिः ॥२०॥

चान्द्री साक्षया षोडशी कला ॥६२१॥

सर्वामङ्गलशीलोऽपि शोभां वहति शङ्करः ।
ययैषास्तु हिता चान्द्री साक्षया षोडशी कला ॥२१॥

यत्तत्पदानुबन्धा ॥६२२॥

ख्यातानुभूतप्रकृतार्थगम्या या सर्वशास्त्रेषु विलासरम्या ।
विराजते ब्रह्ममयीव यत्तत्पदानुबन्धा जयतीह बुद्धिः ॥२२॥

यक्षिणी ॥६२३॥

ालातपप्रकरसंकररोचमान-
कैलासमानससरोजवचायलोला ।
क्षारविन्दतुलयेव विनिर्मितेर्ष्या
यक्षादिदोषमक्रशं हर यक्षिणी त्वम् ॥२३॥

धनदार्चिता ॥६२४॥

यत्प्रसादात् कुबेरोऽपि[1] यक्षेशोऽपि धनाधिपः ।
अस्ति त्र्यम्बकसन्मित्रं सैव त्वं धनदार्चिता ॥२४॥

चित्रिणी ॥६२५॥

चित्रं चित्रं तद्विचित्रं पवित्रं
नृत्तं दृष्टया(ष्ट्वा) नोविगीतं[2] च गीतम् ।
श्रुत्वा लोको चित्रचित्तप्रवृत्ति-
र्यस्या मित्रं चित्रिणीहास्तु सास्य ॥२५॥

चित्रमाया ॥६२६॥

संसारमेष क्षणदृष्टनष्टं
निर्णीय निर्णीय तथापि चित्रम् ।
मित्रं न मित्रं च करोति मोहं
प्राप्तो यया सा किल चित्रमाया ॥२६॥

विचित्रा ॥६२७॥

नानाभावेषु या नानातनुस्तिष्ठत्यसंकरम् ।
तथापि भात्यनानैव विचित्रास्तु हिताय वः ॥२७॥

भुवनेश्वरी ॥६२८॥

तन्त्रमन्त्रहृदयं दयानिधिर्या न्ययुङ्क्त भुवनानि चित्रया ।
चेष्टया बहुषु यापि केवलं राजतेऽत्र भुवनेश्वरीति सा ॥२८॥

---

१. कुत्सितं बेरं शरीरं यस्य । २. निन्दितम् ।

चामुण्डा ॥६२९॥

कृत्तस्याङ्गस्यालये[1] वीक्ष्य यस्या
भूयो वागाख्यस्य सम्यक्प्ररोहम् ।
को नाश्चर्यं वा चमत्कारमेति
चामुण्डा सा रक्षतान्मामघौघात् ॥२९॥

मुण्डहस्ता ॥६३०॥

मुण्डप्रयोगसंलक्ष्या मुण्डमालाकुलस्तनी ।
सा मुण्डकुण्डला भूयाद् मुण्डहस्तास्[2]तनाशिनी ॥३०॥

चण्डमुण्डवधोद्धुरा ॥६३१॥

अखण्डभावनैः सम्यक्सेविताखण्डलादिभिः ।
ब्रह्माण्डस्थितिकृज्जीयाच्चण्डमुण्डवधोद्धुरा ॥३१॥

अष्टमी ॥६३२॥

अष्टसप्ततिथिमध्यरक्षतामागताष्टकलचन्द्रराजिता ।
अष्टशक्तिमयविग्रहा[3] ग्रहैरष्टमी जयति पूजिताष्टभिः ॥३२॥

एकादशी ॥६३३॥

एकं दशापि प्रबलेन्द्रियाणि ध्यानाद्यदीयाद्वशतां त्यजन्ति ।
एकैव सेयं दशदिक्पतीनामेकादशी काचन पूजनीया ॥३३॥

पूर्णा ॥६३४॥

या पूर्णचन्द्रप्रभवामृतेन
संघूर्णितांस्तान् सुमनःसमूहान् ।

---

१. नगरकोटाख्यदेशे । २. उदयकारिणी । ३. तन्त्ररूपेण ।

निमेषमात्रेऽपि कृतावहेलान्
करोति पूर्णास्तु हिताय तूर्णम् ॥३४॥

नवमी ॥६३५॥

गुप्ता[1] द्विधापि प्रकटा[2] द्विधापि
न वामबोधेन विनास्ति पूज्या ।
या वैभवं मे नवतो[3]षितेयं
नवं नवं सा नवमी करोतु ॥३५॥

चतुर्दशी ॥६३६॥

चतुर्दशानि या व्याप्य भुवनानि विराजते ।
चतुर्[4]दशतयीं विद्यां सा ददातु चतुर्दशी ॥३६॥

अमा ॥६३७॥

जातो[5] मनस्तः पुरुषस्य सोमः पुनर्मनस्येव लयं जनानाम् ।
प्रयाति य[6]स्यां परदेवतेयममा शमारामकरी ममास्तु ॥३७॥

कलशहस्ता ॥६३८॥

सकलं स्वकलाभिर्या तर्पयत्यक्रमं जगत् ।
कृच्छ्रे कलशहस्तेयं देयाद्धस्तावलम्बनम् ॥३८॥

पूर्णकुम्भधरा ॥६३९॥

संसारकल्पवृक्षोऽयं परं सरसभास्वरः ।
यत्सेकदानात् सततं पूर्णकुम्भधरेति सा ॥३९॥

---

१. आषाढनवमी सहस्यनवमी । २. आश्वयुजनवमी चैत्रनवमी । ३. नवेन स्तुत्या । ४. चतुर्दश अवयवा यस्याः । ५. 'चन्द्रमा मनसो जातः' इति श्रुतिः । ६. अमावस्यायाम् ।

धरा ॥६४०॥

सुदुर्धरेणाम्बुधरेण सिक्ता
या भास्करोस्रप्रतिभासरक्ता ।
स्नाताङ्गरागारुणिताङ्गनेव
विभाति सेयं कथिता धरेति ॥४०॥

अभीरुः ॥६४१॥

या वर्तते निगमकिङ्करतां विहाय
स्वातन्त्र्यबद्धनिगमप्रसरप्रवृत्ता ।
शीघ्रं फलं विदधती विविधं विवृद्धं
साभीरुरस्य हरतां बत भीरुभावम् ॥४१॥

भैरवी ॥६४२॥

स्वैरचारनिरता रतातुरा मद्यमांसरसलम्पटाधरा ।
अट्टहासचतुरास्यदन्तुरा भैरवी हरतु वैरिजं दरम्[1] ॥४२॥

भीमा ॥६४३॥

सीमन्तबद्धसितभोगिविमिश्रवेणि
यन्मस्तकं सुरनदीव विभाति सद्यः ।
नैद्यार्यमात्मजजुषा[2] प्रविभक्तसीमा
भीमास्तु भीमदयिता मयि सौम्यदृष्टिः ॥४३॥

भीरा ॥६४४॥

गम्भीरवीरवरतारणभारधीरा
या केरलीकुतुककेलिकलापरापि ।

---

१. भयम् । २. यमुनया ।

शर्मश्रिया भयहतौ चतुरा परेषां
भीरास्ति सा स्वयमहो धृतभीरशस्त्रा ॥४४॥

त्रिपुरभैरवी ॥६४५॥

बालसूर्यकिरणारुणाम्बरा नीलकैरवललद्विलोचना ।
संनिधावलकश्रृङ्खलोज्ज्वला देवता त्रिपुरभैरवीह नः ॥४५॥

महारुण्डा ॥६४६॥

तमोगुणमयी हृत्वा संकलं[1] वादयन्त्यपि ।
नृत्यन्ती च स्वयं काचित् महारुण्डा जयत्यसौ ॥४६॥

रौद्री ॥६४७॥

सर्वस्य सर्वस्य च सर्वथैव सर्वत्र सर्वेप्सितदा सदापि ।
कथं नु गीता परमेश्वरीयं रौद्रीति नाम्ना परसौम्यभावा ॥४७॥

महाभैरवपूजिता ॥६४८॥

महामांसरसक्षीवा महानीलशिलारुचिः ।
महाशान्तिप्रदा भूयान्महाभैरवपूजिता ॥४८॥

निर्मुण्डा ॥६४९॥

नृत्यन्तीं यां वीक्ष्य संख्यप्रदेशे[2]
केचिन्मोहं यान्ति केचिच्च नाकम् ।
केचिन्मिथ्यामृत्युमेव श्वसन्तो
निर्मुण्डा मां वक्रतुण्डं यथाव्यात् ॥४९॥

---

१. संसारम् । २. संग्रामे ।

हस्तिनी ॥६५०॥

अस्तव्यस्तसमस्तदुर्नयकला सारज्ञया प्रज्ञया
विध्वस्ताखिलकार्यदिष्टविषयोच्छेदप्रभेदोन्मदा ।
व्यस्तप्रस्तरदुस्तरस्तनयुगाभोगातिभोगातुरा
भूयाद्धस्तिलसत्सुमस्तकतला स्वस्तिप्रदा हस्तिनी ॥५०॥

चण्डा ॥६५१॥

सर्वोत्तमानन्दकलादिबीजं
चण्डेति गीतासि कथंनु किंवा ।
रुद्रस्य सङ्गात्किमु दक्षयज्ञ-
नाशेन किंवार्थविलोमनाम्ना ॥५१॥

करालदशनानना ॥६५२॥

शवमांसासृगस्थ्नां या रसचर्वणलम्पटा ।
पितृकाननगा[1] जीयात् करालदशनानना ॥५२॥

कराला ॥६५३॥

यां वीक्ष्य भीतवदजः[2] पिदधौ स्वमब्जे
जानेऽर्णवेऽर्णवजनूरमणोऽपि[3] वासम् ।
निर्माति सोऽपि हरिदन्तचरः सुनग्नः
शूली जयत्यतितरामिह सा कराला ॥५३॥

विकराला ॥६५४॥

शवमांसरसोन्मदाट्टहासैर्विदितात्मप्रचरा चराचराणाम् ।
भयहेतुरलं लयं श्रयन्ती विकराला कलिजं मलं हरास्य ॥५४॥

१. श्मशानगा । २. ब्रह्मा । ३. लक्ष्मीपतिः ।

घोरघुर्घुरनादिनी ॥६५५॥

अहं विलासिनीशोऽयं ध्यानभाक् किमकालवित् ।
इतीव रोषतो देवी घोरघुर्घुरनादिनी ॥५५॥

रक्तदन्ता ॥६५६॥

तारुण्यारुण्यमालोक्य सर्वगात्रेषु संस्फुरत् ।
रक्तदन्तापि सा भूता स्पर्धयेव तदर्थिता ॥५६॥

ऊर्ध्वकेशी ॥६५७॥

हरोर्ध्वाङ्गगङ्गातरङ्गानुषक्ता
यदर्धाङ्गवेणी सुकान्तिं दधाति ।
न भूतां तमिस्रान्ययोः सङ्गभाजो-
र्मिथः केशभूतिप्रदास्तूर्ध्वकेशी ॥५७॥

बन्धूककुसुमारुणा ॥६५८॥

संस्तुतारुणसूतेन महाहारुणभूषणा ।
क्षणदास्तु भवभ्रान्तेर्बन्धूककुसुमारुणा ॥५८॥

कादम्बरी ॥६५९॥

सर[२]स्वतीवान्तरनीरपूरं सर[३]स्वतीवान्तररागरूपम् ।
कादम्बरी सा विषयेऽन्तरस्थं हर्षं स्वकीयं प्रकटीकरोतु ॥५९॥

पटासा ॥६६०॥

निराभासं च यद्भासा भासितं भुवनत्रयम् ।
सन्मानसकृतावासा पटासा सा दहत्वघम् ॥६०॥

---

१. ब्रह्मविष्णुरुद्रवैभवदात्री । २. नदी । ३. शततन्त्री वीणा ।

काश्मीरी ॥६६१॥

यामाराध्यातनुत मतिमान् कश्यपो वश्यभूति-
भूमेर्देशं प्रतिनिधिमिवोत्तुङ्गतीर्थैकरङ्गम् ।
तुङ्गत्तुङ्गद्विषमशिखरिख्यातसम्यक्समत्वं
काश्मीरी मां सुखयतु सुपूर्णैकवासानुभूत्या ॥६१॥

कुङ्कुमप्रिया ॥६६२॥

इतरानवधीर्य सूनराशीन्
मदनारिं परिकुण्ठितान्निहन्तुम् ।
अवलोक्य तु कुङ्कुमं बहिःस्थं
क्षतरक्तं किमु कुङ्कुमप्रिया सा ॥६२॥

क्षान्तिः ॥६६३॥

नोद्योगिता न प्रभुता न वा गी-
र्न धीस्तथा सौख्यनिमित्तमत्र ।
यथा नितान्तं प्रकटीकृतेयं
क्षान्तिः क्षतभ्रान्तिभिरीडनीया ॥६३॥

बहुसुवर्णा ॥६६४॥

सत्यं बहुसुवर्णासि वसन्त्यपि गृहे यतः ।
सर्वामङ्गलशीलस्य भिक्षोः सत्सर्वमङ्गला ॥६४॥

रतिः ॥६६५॥

न जितो मदनेनापि सदा सरतिनापि यः ।
अधीनः सोऽपि भूतेशो यस्याः सा हि रते रतिः ॥६५॥

बहुसुवर्णदा ॥६६६॥

अन्येभ्यः प्रार्थितैवेयं यतो बहुसुवर्णदा ।
अपर्णापि ततः सत्यं भूता स्वयमिहेश्वरी ॥६६॥

मातङ्गिनी ॥६६७॥

स्वकीयमूर्ध्ना रहितोऽपि यस्या
हस्तीन्द्रमूर्ध्ना परियोजितोऽहो ।
जीवन् दयां प्राप्य स विघ्ननाथो
मातङ्गिनी भङ्गहरी भवेऽस्तु ॥६७॥

वरारोहा ॥६६८॥

धरित्रीशानत्वं निखिलमतिहीनप्रतिभयं
शरीरं नीरोगं सुविततयशःसुन्दरतरम् ।
विचित्रा वाक्स्फूर्तिर्धृतिमतिमुखो वा गुणगणो
वरारोहासेवाशतशतकलां नार्हति कलाम् ॥६८॥

मत्तमातङ्गगामिनी ॥६६९॥

सुमुखी सेविता येन मत्तमातङ्गगामिनी ।
न तस्य चित्तवृत्तिः स्यादन्यभावाभिगामिनी ॥६९॥

हिंसा ॥६७०॥

वेदाज्ञया यां विरचय्य तज्ज्ञा
यज्ञेषु सिद्धिं प्रतियान्ति काम्याम् ।
यत्कर्तृकर्मत्वगताश्च संख्ये
जयाव्यये सास्तु हिताय हिंसा ॥७०॥

हंसगतिः ॥६७१॥

इयं हंसगतिर्येन सेविता तद्धृदि स्वयम् ।
भवेद्धंसगतिः सम्यक् सदा स्थिरतरा परा ॥७१॥

हंसी ॥६७२॥

हंसगा हंसगा हंसज्ञानदा हंसजिन्मुखा ।
हंसजप्यमयी हंसी हंसभावं ददातु वः ॥७२॥

हंसोज्ज्वलशिरोरुहा ॥६७३॥

सहंसचिह्नसद्भूषा हंससुन्दरकूजिता ।
मानसे भातु भक्तानां हंसोज्ज्वलशिरोरुहा ॥७३॥

पूर्णचन्द्रमुखी ॥६७४॥

सीमन्तसिन्दूरकचत्तडित्वत्सुकेशपर्जन्यनिरुद्धमुक्तः ।
यदास्यमिन्दुः किमु पूर्णचन्द्रमुखी पुरो हर्षकरी सदास्तु ॥७४॥

श्यामा ॥६७५॥

सितान्धकारं वितनोत्यपूर्वं
श्यामेव रात्रिः किमियं तदीशी ।
दृष्टैव साधोर्यदलं विधत्ते
श्यामेह नेत्रान्ध्यमनन्यगत्वात् ॥७५॥

स्मितास्या ॥६७६॥

अर्धाङ्गशम्भोः परिपूरणाय
शिरोविधोरेककलस्य देवी ।
या षोडशांशेन्दुजिघ(घी)र्षयेव
स्मितं विधत्तेऽस्तु हिता स्मितास्या ॥७६॥

श्यामकुण्डला ॥६७७॥

यन्मुखं कुण्डलाश्लिष्टं भाति सालकपत्रकम् ।
सभृङ्गद्वयभूम्यब्जमिव सा श्यामकुण्डला ॥७७॥

मषी ॥६७८॥

यदा त्वं भवानी स्वयं देवदेवी
मषी स्या विनाशोज्झिता सिन्धुपात्रे ।
लिखन्ती च नित्यं त्वमेव प्रकृष्टा-
स्तदापि त्वदीया गुणाः पारहीनाः ॥७८॥

लेखिनी ॥६७९॥

आगमाश्च निगमा यया पुरा
चित्रिता मुनिवरैः स्वयम्भुवः ।
आज्ञयात्र जगतः प्रवृत्तये
मुक्तये च सुखदास्तु लेखिनी ॥७९॥

लेख्या ॥६८०॥

केन केन न रूपेण कुत्र कुत्रासि दर्शने ।
लेख्याऽऽलेख्ये च भूतानां नानाशासनपट्टके ॥८०॥

सुलेखा ॥६८१॥

दृष्ट्वैव यां स्वाभिमतैर्विसृष्टां
सर्वोऽपि जन्मेह सुलेखभागि ।
वेद प्रसन्नान्तरवक्त्रनेत्रो
मय्यस्तु सा स्वार्थकरी सुलेखा ॥८१॥

लेखकप्रिया ॥६८२॥

तेनाक्षराणि संलोक्य चित्रितानीह[1] चित्रिताः ।
भवन्तीह जना यस्य प्रसन्ना लेखकप्रिया ॥८२॥

शङ्खिनी ॥६८३॥

असंख्यसंख्येषु तनुः स्वकीया
येनेह सम्यग्न हुता कथं नु ।
शङ्खोज्ज्वलाकारवरा परेयं
संसेव्यते तेन हि शङ्खिनी सा ॥८३॥

शङ्खहस्ता ॥६८४॥

या पाञ्चजन्येन तनोति देव-
दत्तेन हर्षं वसुदेवसूनोः ।
कृष्णस्य कृष्णस्य तथार्जुनस्य
सा शङ्खहस्ता कुरु हस्तलम्बम् ॥८४॥

जलस्था ॥६८५॥

जलं चञ्चलं निम्नमार्गेण गच्छ-
द्रसं सत्त्वसङ्घैः परं दूषितं च ।
तथापीह यज्जीवनं तज्जलस्था-
सदासन्निधेः कोऽपि भावानुभावः ॥८५॥

जलदेवता ॥६८६॥

अपि पङ्कगतं जलान्तराला-
दपि निर्गच्छदपि क्षपासु यच्च ।

1. ख. ग. 'नीव' पाठः ।

सततान्धमपीन्द्रियैकवासं
कमलं तज्जलदेवताप्रसादः ॥८६॥

कुरुक्षेत्रावनिः ॥६८७॥

यत्र चित्रभटां कृष्णौ सेनामजयतां सुखम् ।
कौरवाणां कुरुक्षेत्रावनिर्मामवताद् भयात् ॥८७॥

काशी ॥६८८॥

भिक्षुत्वं वितनोति यत्र वसतः श्रीविश्वनाथः शिवो
मृत्वा यत्र पुनर्भवं न लभतेऽपूर्वं भवत्वं श्रितः ।
या सर्गान्तकलैकसाक्ष्यविषयः सर्वप्रकाशा स्वतः
सा काशी परिकाशते मम हृदाकाशे सदा निर्भिदा ॥८८॥

मथुरा ॥६८९॥

अजोऽपि यामास्थितयोः स जातः
कृष्णोऽपि कार्ष्ण्यं हृतवान् स्वपित्रोः ।
चकार चित्तं चलितोऽपि सद्यः
स्थिरं रसश्रीर्मथुरास्ति कापि ॥८९॥

काञ्ची ॥६९०॥

न्यञ्चन्न्यञ्चदुदञ्चितभ्रुलतिका रामा विपञ्चीस्वनाः
किञ्चित्किञ्चिदपाङ्गरङ्गचलनासङ्क्रान्तकर्णा जनुः ।
दृष्ट्वा वेद न वञ्चितं रससुधानन्देन मन्दस्मिता
यस्यां काञ्चन काञ्चनाद्रिविषयां काञ्ची ददातु श्रियम् ॥९०॥

अवन्तिका ॥६९१॥

किं संबोधनमच्युतस्य कतमं बीजं सुधासूचकं
लङ्जः प्रत्यय आद्य एकवचने पुंस्यस्ति कोऽनात्मने ।
स्पर्शादेर्यममात्रकस्य कतमं रूपं च मोक्षप्रदा
का पूर्भास्करयानमध्यविषया संराजतेऽवन्तिका ॥९१॥
(अन्तर्लापिकेयम्)

अयोध्या ॥६९२॥

सर्वेऽन्तकाले रघुनन्दनस्य
प्रत्येकमन्तस्त्वरया सरय्वाः ।
निमज्जितुं यत्र मिथो बभूवु-
र्योध्या जनाः सास्ति च काप्ययोध्या ॥९२॥

द्वारका ॥६९३॥

हर्षोत्कर्षाय शौरेरभयभवकरी भक्तितः काप्यपूर्वं
किंचित्कालं बभूव प्रकटितविषयाद्यन्तगुप्तेव बीजम् ।
सर्वासां सत्पुरीणां त्रिदशवनभुवां मोक्षरूपं लतानां
या दृष्टा वापि गुप्तेव भवति मनसः स्पन्दनाद् द्वारका सा ॥९३॥

माया ॥६९४॥

मीयते केन सा माया मायां यद्वासिनो जनाः ।
हित्वा भवन्ति सद्बोधा विष्णुमायेश्वराः स्वयम् ॥९४॥

तीर्था ॥६९५॥

आचार्ये वा जीवने दर्शने वा
भक्ताः स्नाताः चर्चिता एव यस्याः ।

नामख्याते तीर्थ्यतां यान्ति काचि-
त्तीर्थ्यानां सा केन तीर्था न तीर्थ्या ॥९५॥

तीर्थकरप्रिया ॥६९६॥

दुर्गेष्वगेष्वप्यतिदुस्तरेषु
नीरेष्वरण्येषु च दस्युसत्त्वैः ।
रुद्धेषु पारं कथमीयुरेते
न चेद्धिता तीर्थकरप्रिया स्यात् ॥९६॥

त्रिपुष्करा ॥६९७॥

पुष्करध्वनिवितीर्णमानसा पुष्करोद्धृतकरा परापरा ।
पुष्करे हृदि ममात्र भासतां पुष्करासनगता त्रिपुष्करा ॥९७॥

अप्रमेया ॥६९८॥

भूतत्वं नास्तिकानां विदि सुगतमते चञ्चलज्ञानभावं
जैने जीवादिवादं नवविषयतयं तत्त्वसंख्यं च सांख्ये ।
मीमांसायां च कर्मत्वमपि कणभुजो दर्शने षट्पदार्थ-
भावं या याति चैक्यं श्रुतिशिरसि परं सा प्रमेयाऽप्रमेया ॥९८॥

कोशस्था ॥६९९॥

वैश्वानरेण चौरेण राज्ञा वान्येन तद्धने ।
लोष्टवत् क्रियते दृष्टिः कोशस्था येन पूजिता ॥९९॥

कोशवासिनी ॥७००॥

यत्प्रसादात् कुबेरोऽपि हरोपान्तेऽपि शक्तिमान् ।
राजराजो धनेशोऽस्तु मद्गृहे कोशवासिनी ॥१००॥

स्वस्वातन्त्र्यपरानुभूतिकलयावश्यंभवित्र्योद्गते
साहिब्कौलइतिप्रथावति पदे निर्माति यः स्वासनम् ।
काव्ये तस्य सहोदरेऽत्र विवृतेर्गीतानुसारं प्रति
भान्त्या नामविलासनाम्नि विरतिं भक्तिर्गता द्वादशी ॥१०१॥

इति श्रीमहामाहेश्वराचार्यवर्यसाहिबकौलानन्दनाथविरचिते
नामविलासे द्वादशी भक्तिः ॥१२॥

---

## त्रयोदशी भक्तिः ।

कौशिकी ॥७०१॥

यत्प्रसादमधिगत्य कौशिकः स्वेच्छया व्यतनुतापरं परम् ।
कौशिकादिभयहेतुमद्भुतं सर्गसूर्यमियमेव कौशिकी ॥१॥

कुशावर्ता ॥७०२॥

विशालैर्भूरिशालैर्यालयैर्वाराङ्गनालयैः ।
सुखदाऽसुखदा सैषा कुशावर्ता पुरीश्वरी ॥२॥

कौशाम्वी ॥७०३॥

कुशोऽकार्श्यमदुर्दर्शो वैरिभिः स्वैरतोऽशिषत् ।
यस्यां राज्यमियं भूयात् कौशाम्बी कौशलप्रदा ॥३॥

कोशवर्द्धिनी ॥७०४॥

यद्दर्ष्यन्यः क्षणं जीवन् संचयी तन्मुधा त्वियम् ।
निर्नाशा सर्वदा स्थाने गार्धिनी कोशवार्द्धिनी ॥४॥

कोशदा ॥७०५॥

ददासीश्वरी यत् सदा भोगयोग्यं
सुकोशं त्रिशोकत्वदं वीतदोषम् ।

बहिर्यद् द्यसि त्वं परं वान्तरसाद्
द्विधा कोशदा रोषदा सा जयन्ती ॥५॥

पद्मकोशाक्षी ॥७०६॥

यत्कटाक्षरसास्वादचतुरो हरषट्पदः ।
महेशी पद्मकोशाक्षी ममाक्षिविषयेऽस्तु सा ॥६॥

कुसुमा ॥७०७॥

नानाकृतिर्गन्धविजृम्भिताशा विकाशते षड्ऋतुसंश्रया या ।
लताधिदेवीपरिसेवनीया स्वरूपदा सा कुसुमा ममास्तु ॥७॥

कुसुमप्रिया ॥७०८॥

कुसुमानि न कस्येह प्रियाणि तदियं यतः ।
स्वयं सर्वप्रिया सापि परमा कुसुमप्रिया ॥८॥

तोतुला ॥७०९॥

या कुलाकुलतुलास्थली तुला-
स्वामिनिर्मलसमाहितस्तुतिः ।
बालपल्लवललत्कराधरा
तोतुलातुलकला कलास्तु सा ॥९॥

तुलाकोटिः ॥७१०॥

यद्ध्यानशिक्षार्थमिवेह मानसे
स्नात्वापि हंसा बिसखण्डवृत्तयः ।
भूताः सिता नैव तु शब्दवेदिनो
देयात् तुलाकोटिरियं तुलां निजाम् ॥१०॥

कूटस्था ॥७११॥

विचित्रामपि निर्माय सृष्टिं तत्कर्मणा न या ।
लिप्यते जातुचित् काचित् कूटस्था चिन्मयीह सा ॥११॥

कोटराश्रया ॥७१२॥

निशासु या गोपितसुस्वरूपतो
भातीश्वरी निःश्रुतिवेद्यतां गता ।
हृत्कोटरं भूषय देवि कोटरा-
श्रया श्रिया नित्यनिजासनेद्धया ॥१२॥

स्वयम्भूः ॥७१३॥

अभूः शम्भुरम्भोजभूर्वा प्रभाव-
स्वभावानुभावप्रभामप्यभूताः ।
यदीयां प्रमातुं गुणाभाविता तां
कथं सा स्वयम्भूर्जडैर्न्याय्यभाव्या ॥१३॥

सुरूपा ॥७१४॥

यथा तथा यत्र कुत्र स्थिता या प्रसभं मनः ।
जनस्य हरते सैव सुरूपेति निरूपिता ॥१४॥

स्वरूपा ॥७१५॥

कृत्वा स्वतः सर्गविभागयोगं
स्वयं प्रवेशं च तदन्तरापि ।
परात् स्वरूपान्न कदापि यस्मा-
च्चलत्यतः सा हि सदा स्वरूपा ॥१५॥

रूपवर्द्धिनी ॥७१६॥

सृष्टोऽपि विधिना तावत् कथं स्याद्रूपभाग्जनः ।
यावन्नेयं प्रसन्ना स्यान्नीरूपा रूपवर्द्धिनी ॥१६॥

तेजस्विनी ॥७१७॥

येनापि केनापि युतं तदीयं
वर्णेन दृष्ट्वैव मुखं न को वा ।
स्खलत्यपि प्राप्तबलात् स्वधैर्या-
त्तेजस्विनी यस्य सदा प्रसन्ना ॥१७॥

सुभिक्षा ॥७१८॥

यद्धीनकाले तनुजं च हित्वा
पश्यन्तमत्त्येव न चेत्सुभिक्षा ।
सा त्वं भवेः कापि सदा सहाया
कः स्यात्तदा दातृकलाबलज्ञः ॥१८॥

बलदा ॥७१९॥

पवनो वाति निष्पादोऽप्यश्रान्तं यद्दयाश्रयात् ।
सर्वत्र बलदा सास्तु स्वातन्त्र्यबलदा सदा ॥१९॥

बलदायिनी ॥७२०॥

प्रबलबलविलासशालिनोऽपि
हरिहयहस्तिमुखान् करोति वश्ये ।
अधिगतसुदयो यतोऽपि मर्त्यो
भवतु सदा बलदायिनी विनेत्री ॥२०॥

महाकोशी ॥७२१॥

अन्यकोशी ददातीह वसु स्थापितमेव वा ।
देवी त्वेषा महाकोशी ददात्युत्पादयत्यपि ॥२१॥

महावर्ता ॥७२२॥

एकभागेऽपि यन्नाभेर्भातीदं निखिलं जगत् ।
अन्तेऽसंबाधमेवास्तु महावर्ता महत्त्वदा ॥२२॥

बुद्धिः सदसदात्मिका ॥७२३॥

ज्ञानाज्ञानविलासेद्धं यया भासितमद्भुतम् ।
इदं साहं स्वयंसिद्धिर्बुद्धिः सदसदात्मिका ॥२३॥

महाग्रहहरा ॥७२४॥

अपि दुर्निग्रहैर्नाम ग्राहकः पीड्यते ग्रहैः ।
कदापि नाग्रहो यस्या महाग्रहहरास्ति सा ॥२४॥

सौम्या ॥७२५॥

सौम्येति या नोपमिताभिधामा
नौम्याविराविष्कृतभक्तिसिक्तः ।
उमां समां तां करशोभिसोमां
सोमाननां सोमकलावतंसाम् ॥२५॥

विशोका ॥७२६॥

लोकस्य शोकः परिलोक्य एव
स्वतो द्वितीयप्रियवस्तुनष्टेः ।
आलोक आत्मातिगतं न यत्सा
विलोकयत्येतदतो विशोका ॥२६॥

शोकनाशिनी ॥७२७॥

सुविततनिजलोकहर्षतृप्तः
स सततशोकमयेऽपि लोककोशे ।
कथमिह न भवेद् वसन् सहाया-
निशमिह यस्य हि शोकनाशिनी त्वम् ॥२७॥

सात्त्विकी ॥७२८॥

याति तातपदवीं समाततां भातबालवपुषाप्युपागतः ।
सर्वसातकरसन्मतक्रमश्चेतसि स्फुरति यस्य सात्त्विकी ॥२८॥

सत्त्वसंस्था ॥७२९॥

सृष्टं सुविषमं स्रष्ट्रा पातीदं सात्वतां पतिः ।
सर्मं यद्दयया सत्त्वं सत्त्वसंस्था ददातु सा ॥२९॥

राजसी ॥७३०॥

सृजत्येतां जगद्राजिं प्राज्यो यद्भजनादजः ।
पूज्यत्वं राजराजानां राजसीयं ददातु नः ॥३०॥

रजोवृता ॥७३१॥

नीरजस्कः सदोजस्को भवेद्यद्भजनाञ्जनः ।
त्वणाभ्यस्तात् सदा सापि चित्रं स्वेन रजोवृता ॥३१॥

तामसी ॥७३२॥

ते ते हता दैत्यवरा ययापि
शेषेव सा चक्रकठोरकोटिः ।
यत्स्वा रवेः कण्ठतटे पपात
स तामसीध्यानभवोऽनुभावः ॥३२॥

तमोयुक्ता ॥७३३॥

स्थाणुः पशुपतिः शूली स्वयं सर्वं हरत्यपि ।
बलं यस्याः समादाय तमोयुक्तास्ति सा शिवा ॥३३॥

गुणत्रयविभाविनी ॥७३४॥

त्रिदेवी यद्गुणान् वीक्ष्य वेत्ति स्वस्मिन् गुणप्रथाम् ।
निर्गुणापि स्वलीलायै गुणत्रयविभाविनी ॥३४॥

अव्यक्ता ॥७३५॥

सर्वदर्शि यथा चक्षुः स्वरूपं नैव पश्यति ।
तथा तज्ज्ञगताप्यज्ञगताऽव्यक्ता जयत्यसौ ॥३५॥

व्यक्तरूपा ॥७३६॥

उन्मेषनिःशेषकलाबलेन या व्यक्ततां याति जगत्त्रयेह ।
सा व्यक्तरूपाह्वयरूपरूप्या व्यनक्तु रूपं रसराजरम्यम् ॥३६॥

वेदविद्या ॥७३७॥

परापरत्वेन विभाति काचित्
प्रवृत्तितद्व्यत्ययसिद्धिहेतुः ।
यैकैव निःशेषविशेषशेषा
स्वान्ते सतां सिद्ध्यतु वेदविद्या ॥३७॥

शाम्भवी ॥७३८॥

यान्तर्दृश्या बहिरपि सदा निर्निमेषस्वदृष्टि-
श्चित्रं चित्रं ग्रथयति हतग्रन्थिवृत्तिप्रवृत्तेः ।

१. ग. 'निर्मिमेष' पाठः ।

तारं तारं कलयति ययाभ्यस्तया तारकं तं
संसाराब्धेर्भवतु भवतां भूतये शाम्भवीयम् ॥३८॥

शङ्कराकल्पिनी कल्पा ॥७३९॥

कल्पं त्वया कथं वेद्यात् कल्पेत च हरो न सः ।
शङ्कराकल्पिनी कल्पा सदाङ्गस्था न चेद् भवेत् ॥३९॥

मनःसंकल्पसन्ततिः ॥७४०॥

केन केन न रूपेण कस्य कस्य न भासते ।
सन्ततं हन्त विश्रान्त्यै मनःसंकल्पसन्ततिः ॥४०॥

सर्वलोकमयी शक्तिः ॥७४१॥

लोकलोकसमालोकभावं याता विलोक्यते ।
सर्वलोकमयी शक्तिरेकालौकिकलोचनैः ॥४१॥

सर्वश्रवणगोचरा ॥७४२॥

यज्जनस्य भवेद् बुद्धिः सर्वश्रवणगोचरा ।
चराचरचरा सैव सर्वश्रवणगोचरा ॥४२॥

सर्वज्ञानवती वाञ्छा ॥७४३॥

सर्वज्ञानवती वाञ्छा भाति यद्धृदयाम्बरे ।
जीवन्नपि स निर्मुक्तः क्लेशपाशाङ्कशग्रहात् ॥४३॥

सर्वतत्त्वानुबोधिनी ॥७४४॥

प्रापय्य सर्वतत्त्वानि चिन्मात्रे केवले परे ।
तत्त्वे हृष्यति यद्भक्तः सर्वतत्त्वावबोधिनी ॥४४॥

जाग्रती ॥७४५॥

विश्ववैश्वानरावत्तः सुस्थूलान् विषयान् यया ।
जाग्रती सा खगेशानप्रभा जागर्तु हृद्दिवि ॥४५॥

सुषुप्तिः ॥७४६॥

संचेत्यसंकल्पविलासभासा
शून्यो यया तिष्ठति पूर्णतुष्टिः ।
प्राज्ञो महेशोऽपि सुषुप्तिरेषा
भात्यप्यहो मे व्यवहारभूमौ ॥४६॥

स्वप्नावस्था ॥७४७॥

स्वस्वसृष्टौ विधेर्भावं याति सर्वोऽपि यच्छ्रिया ।
असामान्यार्थमान्या सा स्वप्नावस्थास्तु सौख्यदा ॥४७॥

तुरीयका ॥७४८॥

ब्रह्मादितो यापि पिपीलकान्तं
प्रोतेव तिष्ठत्यविनष्टदृष्टिः ।
साधारणा बीजरसोऽङ्कुरादौ
तुरीयकाद्य त्वरयातुरत्वम् ॥४८॥

त्वरा ॥७४९॥

यया जनो मारुतदूषितान्त-
र्भावं प्रयातीव विविक्तदृष्टिः ।
सेयं त्वरा नस्त्वरयत्वनन्तं
मनीषितं तत्तनुमत्समीह्यम् ॥४९॥

मन्दगतिः ॥७५०॥

आदाय शीघ्रां गतिमादितः कि-
मितः प्रयाणाय परत्र देवी ।
विमृश्य सर्वत्रगतं पुनः स्वं
भूता स्वभूर्मन्दगतिर्गतिर्नः ॥५०॥

मन्दा ॥७५१॥

यानेन हासेन सुभाषणेन
तेनापि तेनापि विलोकनेन ।
मन्देन यानन्दकरी सुभक्तेः
सामन्दसौन्दर्यमयी च मन्दा ॥५१॥

मदिरामोदधारिणी ॥७५२॥

भिक्षाटनस्वभावोऽपि शिवषट्पदराट् कथम् ।
सक्तस्तत्रैव चेन्न स्यान्मदिरामोदधारिणी ॥५२॥

पानभूमिः ॥७५३॥

यत्रेन्द्रियैर्विषयशीधुरमत्रभूतै-
र्नानाप्रमेयपरिचर्वणवृद्धतृष्णाम् ।
आस्वाद्यते गतविमोहकलङ्कशङ्कै-
र्भक्तैर्जयत्यतितरामिह पानभूमिः ॥५३॥

पानपात्रा ॥७५४॥

सच्चित्सुधाशीधुरलं न यत्र
चित्रं पवित्रो लयमेति द्वित्राः ।

दयास्वतन्त्रास्तमपि स्वदन्ते
सा पानपात्रा भवतात् सदाग्रे ॥५४॥

पानदानकरोद्यता ॥७५५॥

साधकानां निराधीनां पानदानकरोद्यता ।
नित्यं भक्त्या वशीभूता यैषा भवतु हर्षदा ॥५५॥

आघूर्णारुणनेत्रा ॥७५६॥

आघूर्णारुणनेत्रा सा कथं पूज्या न पूजकैः ।
यदीक्षणात् क्षणाद्योगिसाम्राज्यं चैति शष्पताम् ॥५६॥

किंचिदव्यक्तभाषिणी ॥७५७॥

मत्सुधास्वादवाक्येन मूर्छागोचर ईश्वरः ।
मा भूदित्यङ्गसङ्गा सा किंचिदव्यक्तभाषिणी ॥५७॥

आशापूरा ॥७५८॥

या व्याप्यैतत् सकलमकलं सर्वतो निर्मिमीते
या दुस्त्याज्यापि च मयि तथाप्यस्ति सर्वात्ममार्गे ।
साशापूरा शिथिलितरसाऽसारसंसारपाश-
क्लेशं शोषं नयतु नयनालोकमात्रेण सद्यः ॥५८॥

दीक्षा ॥७५९॥

यां प्राप्यैवोत्तमगुरुपदानुग्रहाद् दुर्ग्रहार्त-
भ्रान्तिक्रान्तेः सपदि लभते मुक्तिमात्मैक्ययुक्तिम् ।
जीवन्नेवोत्क्रममभिगतः षड्विधादेष मार्गाद्
दीक्षा प्रेक्षां द्रढय सदसद्वस्तुनि त्वं दयालुः ॥५९॥

दक्षा ॥७६०॥

निर्भित्ति निश्चित्रमयं विचित्रं संसारचित्रं विततं तनोति ।
निर्वर्णसम्भारमरं यदक्षिविलोकमात्रेण ततोऽस्ति दक्षा ॥६०॥

दीक्षितपूजिता ॥७६१॥

त्रिकोणे बिन्दुरूपस्थाऽजिता दीक्षितपूजिता ।
पूजादिभेदिताभेत्री भवत्वस्याभवत्वदा ॥६१॥

नागवल्ली ॥७६२॥

वल्ली न गच्छत्यपरा कदाचि-
दियं तु यद् गच्छति नीलपत्रैः ।
आरुण्यमन्यद्रसितैः सितैर्वा
तन्नागवल्लीति वदन्ति सन्तः ॥६२॥

नागकन्या ॥७६३॥

प्रीतिमालोक्य नागेषु गुर्वीं शम्भोश्चिकीर्षया ।
तस्या इव स्वयं भूता नागकन्यापि सुन्दरी ॥६३॥

भोगिनी ॥७६४॥

सर्वमात्मकलया लयाश्रयां
या वियोजयति योग्ययाभिया ।
भोगिमार्गचरया चराचरं
भोगिनीति गदिता वियोगिनी ॥६४॥

---

१. ग. 'श्रितः' पाठः ।

भोगवल्लभा ॥७६५॥

एकापि भोक्तृभोग्यादिद्वैतं यद्भाति भासितम् ।
तत एव स्वयं जाने सर्वदा भोगवल्लभा ॥६५॥

सर्वशास्त्रवती विद्या ॥७६६॥

गद्यपद्यसुवैशद्यहृद्या सिद्ध्यतु बुद्धये ।
सर्वशास्त्रवती विद्यानवद्या हृदि सर्वदा ॥६६॥

सुस्मृतिः ॥७६७॥

सुस्मृतिः सुस्मृता येन तत्पादाम्भोरुहद्वयम् ।
एकाग्रमनसा सर्वे न स्मरेयुः परं कथम् ॥६७॥

धर्मवादिनी ॥७६८॥

आज्ञाप्यानेकधा धर्मं नैकधर्मेष्वपि स्वतः ।
नैकधर्मात् स्खलन्ती यत्तदेषा धर्मवादिनी ॥६८॥

श्रुतिः ॥७६९॥

यत्साक्ष्यविषयं शास्त्रं सर्वं विषयितां तताम् ।
याति श्रुतिरियं काचिद् ब्रह्मेव जगदम्बिका ॥६९॥

श्रुतिधरा ॥७७०॥

प्राप्नुवन्ति यतः सर्वा सर्गादौ द्रुहिणादिकाः ।
श्रुतिं जगत्प्रवृत्त्यै सा स्वतः श्रुतिधरा परा ॥७०॥

ज्येष्ठा ॥७७१॥

विशिष्टशिष्टा अपि ते वसिष्ठ-
मुखा गरिष्ठाः प्रथितास्त्रिलोक्याम् ।

समाप्य यस्या उपदिष्टमाद्यं
ज्येष्ठा वसिष्ठास्ति सदापि सैव ॥७१॥

श्रेष्ठा ॥७७२॥

अदृष्टधर्मा परदृष्टशिष्टा
निकृष्टदुष्टत्वविनष्टिपुष्टा ।
स्वात्मैक्यनिष्ठा निजभक्तितुष्टा
श्रेष्ठास्तु नः स्वेष्टकरी स्थविष्ठा ॥७२॥

पातालवासिनी ॥७७३॥

त्रिविक्रमनिषिद्धान्यगतेर्भक्तिविकासिनी ।
सर्वोच्चैः किं बलेर्भूता तुष्ट्यै पातालवासिनी ॥७३॥

मीमांसा ॥७७४॥

वेदो नानार्थवादाविदितसुविषयो विप्रतीत्येकहेतुः
सेतुर्व्यापारभाजा जलनिधिसदृशो हन्त सम्यग्निबद्धः ।
सर्वेषां सत्प्रसत्त्या इह सपदि यया वेदसंख्यार्थकर्त्र्या
मीमांसैषा मनीषिप्रकरणरणितं वाग्विलासं ददातु ॥७४॥

तर्कविद्या ॥७७५॥

यत्षोडशार्थप्रमया प्रमाता
निःश्रेयसं याति परार्थवाक्यम् ।
आविष्करोतीह ययापि शुद्धं
सा तर्कविद्या विदितानवद्या ॥७५॥

सुभक्तिः ॥७७६॥

तपो विधायापि च कृच्छ्रमुख्य-
मधीत्य वेदांश्चतुरोऽपि तावत् ।
न किंचिदाप्नोति जनो मनोज्ञः
स्मृता न यावत्सुधिया सुभक्तिः ॥७६॥

भक्तवत्सला ॥७७७॥

नकुलीनोऽपि दुर्देहो यद्भक्तो राजपूज्यताम् ।
अश्नुते वञ्चनाहीनः सा व्यक्तं भक्तवत्सला ॥७७॥

सुनाभिः ॥७७८॥

सुधालहर्या रसराजसिन्धो-
रावर्तरूपे सततं स यस्याः ।
नाभौ निमग्नः परमेश्वरोऽपि
सुनाभिरेषास्तु ममाभिगोप्त्री ॥७८॥

यातना ॥७७९॥

यद्यस्ति यातनायाप्या सर्वस्यापि तदापि सा ।
मय्यस्तु मायातत्कार्यदारिद्र्येणैव शाङ्करी ॥७९॥

जातिः ॥७८०॥

व्यक्तीरनेका निर्णीयात् कथमेकगताश्रयः ।
न चेज्जातिर्भवेत् काचिदेकानेकत्वबोधिनी ॥८०॥

गम्भीरा ॥७८१॥

स्वीयं स्वीयं किं रहस्यं कथं को
गुप्तं कुर्याच्चेन्न चित् सर्ववेत्त्री ।

धीरा वीरेशानचक्रप्रवृत्ति-
गम्भीरा स्यात् स्वप्रकाशा निराशा ॥८१॥

भाववर्जिता ॥७८२॥

याऽभावमपि भावेन भावयन्ती भवप्रिया ।
भावरूपाप्यहो भाववर्जिता सा स्वभावतः ॥८२॥

नागपाशधरा मूर्तिः ॥७८३॥

लीलाविध्वस्तनागेन्द्रवलदुःशत्रुवाहिनी ।
नागपाशधरा मूर्तिः स्फुरताद्रणसंकटे ॥८३॥

अगाधा ॥७८४॥

त्रिलोचनोऽप्यस्तविपत्कलोऽपि
कीदृक् कियद्वेति न जातु शक्तः ।
निर्णेतुमद्यापि यदीयरूपं
न वा भवानी नहि सास्त्यगाधा ॥८४॥

नागकुण्डला ॥७८५॥

विमलालकसंश्लिष्टसुकपोलश्रुतिप्रभा ।
सुवर्णकुण्डला नागकुण्डलेव विराजते ॥८५॥

सुचक्रा ॥७८६॥

चक्रेष्वनेकामलभङ्गिचक्रभिन्नेषु वक्रेष्वपि वक्रताघ्नी ।
सुशून्यचक्रे परिपूज्यते या चक्रेश्वरैः सास्त्वभितः सुचक्रा ॥८६॥

चक्रमध्यस्था ॥७८७॥

सुरासुराप्सरोमुख्यचक्रनायकताङ्किता ।
चक्रहस्ता शिवा चक्रमध्यस्थैव जयत्यसौ ॥८७॥

चक्रकोणनिवासिनी ॥७८८॥

सततं सेविता येन चक्रकोणनिवासिनी ।
विततं स कथं नैव चक्रवर्तित्वमाप्नुयात् ॥८८॥

सर्वमन्त्रमयी विद्या ॥७८९॥

परा मन्त्रविदां वेद्या वेदविस्तरकारणम् ।
सर्वमन्त्रमयी विद्या हृद्याद्येवात्र सिद्ध्यतु ॥८९॥

सर्वमन्त्राक्षरावलिः ॥७९०॥

अखर्वगर्वनिर्वाणमपूर्वं गुह्यमुत्तमम् ।
सर्वा सैवास्ति सर्वत्र सर्वमन्त्राक्षरावलिः ॥९०॥

मधुस्रवा ॥७९१॥

माधुर्यसौगन्ध्यविलोभितालिर्मधुश्रियः पूर्वविलासभूमिः ।
मधुस्रवेयं मधुमन्निषेव्या ददातु सिद्धिं मधुमत्यनूद्याम् ॥९१॥

स्रवन्ती ॥७९२॥

जातापि कर्कशात् काष्ठाद्द्राक्षा साक्षाद्रसायनम् ।
यत्तनोत्येव कोऽप्येष स्रवन्तीसन्निधेर्विधिः ॥९२॥

भ्रामरी ॥७९३॥

साम्राज्ययोग्योऽपि वियोगयोगो
बभ्राम भूताङ्कसमाः समोऽपि ।
यत्क्षोभितान्तःकरणः स रामः
सा भ्रामरी भ्रामय दुर्भ्रमं नः ॥९३॥

भ्रमरालका ॥७९४॥

अलकालिचलत्कान्ति यद्वक्त्रकमलं मलम् ।
अलं हन्तुमलं दृष्टं बाला सा भ्रमरालका ॥९४॥

मातृमण्डलमध्यस्था ॥७९५॥

स्तुता मण्डलवाहेन कमण्डलुधरेण च ।
मातृमण्डलमध्यस्था मण्डलेन्द्रत्वदास्तु नः ॥९५॥

मातृमण्डलवासिनी ॥७९६॥

सभाजनागतान् प्रातस्तानापृच्छ्य सुरोत्तमान् ।
रमते काचिदेकैव मातृमण्डलवासिनी ॥९६॥

कुमारजननी ॥७९७॥

या कुमारयति कापि केवला मारतद्विषयसंशयस्थली ।
मारकालकलनैकबन्धनं सा कुमारजननी कुमारिका ॥९७॥

क्रूरा ॥७९८॥

ककं कं कं कुरु क्रूरा ककाकारं करं करम् ।
राकाकराकराकारं काराकीः कारकं करे ॥९८॥

[ द्व्यक्षरोऽयम् ]

सुमुखी ॥७९९॥

वन्यैरलङ्कारवरैः सुकान्ति
प्रसूनगुञ्जादिभवैरपि स्वम् ।
दधाति लावण्यबलं श्रितं य-
न्मुखं शिवा सा सुमुखीति मुख्या ॥९९॥

ज्वरनाशिनी ॥८००॥

सुचिकित्सकोपचरितेन विना
बहुमन्त्रयन्त्रविधिभिश्च हतिम् ।
भवदुर्ज्वरो व्रजति यत्सुदृशा
ज्वरनाशिनीति किल सा ललिता ॥१००॥

स्वस्वातन्त्र्यपरानुभूतिकलयावश्यंभवित्र्योद्गते
साहिब्कौल इति प्रथावति पदे निर्माति यः स्मासनम् ।
काव्ये तस्य समागते स्वभगिनीं सञ्जातकोदाहृतिं
चित्रान्तेह विलासनाम्नि विरतिं भक्तिस्त्रयोदश्यगात् ॥१०१॥

इति श्रीमहामाहेश्वराचार्यवर्यसाहिबकौलानन्दनाथविरचिते
नामविलासे त्रयोदशी भक्तिः ॥१३॥

# चतुर्दशी भक्तिः ।

अतीता ॥८०१॥

अतीता वादितो भासि तीर्थ्या यदि विदि प्रभा ।
ता यदा नो मानुदितो वादिनोऽग्रे किमाविदि ॥१॥

( अर्धभ्रमोऽयम् ) एतन्न्यासः

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| अ | ती | ता | वा | दि | तो | भा | सि |
| ती | र्थ्या | य | दि | वि | दि | प्र | भा |
| ता | य | दा | नो | मा | नु | दि | तो |
| वा | दि | नो | ग्रे | कि | मा | वि | दि |

विद्यमाना ॥८०२॥

संप्रत्येष्यति वातीते विद्यमानैव केवला ।
दिष्टेऽनवद्यवैषद्यहृद्या सद्यः प्रसीदतात् ॥२॥

[ निश्चतुर्थोऽयम् ]

भाविनी ॥८०३॥

भावाभावाविनाभावानुभावानुभवेन नः ।
भवानी भाविनी नानाभवे नवनवे वन ॥३॥

[ त्र्यक्षरोऽयम् ]

प्रीतिमञ्जरी ॥८०४॥

मयीव सापि फुल्लास्तु भवत्सु प्रीतिमञ्जरी ।
ययाप्रियं प्रियं नानानानाप्रियमपि प्रियम् ॥४॥

सर्वसौख्यवती युक्तिः ॥८०५॥

चित्तं कुत्रापि नाभाति कस्यापि नु यया विना ।
सर्वसौख्यवती युक्तिर्जयत्येषैव विद्वपुः ॥५॥

आहारपरिणामिनी ॥८०६॥

यैकैव षड्विधं भावं व्यनक्ति विविधाकृतिम् ।
सा कापि गीयते तज्ज्ञैराहारपरिणामिनी ॥६॥

निदानं पञ्चभूतानाम् ॥८०७॥

जडान्यपि प्रवर्तन्ते भूतानि विषये यया ।
निदानं पञ्चभूतानां जयति प्रकृतिप्रभा ॥७॥

भवसागरतारिणी ॥८०८॥

भवसागरतारिणी भवसागरतारिणी ।
भवसा गरतारिणी भव सागरतारिणी ॥८॥

[ सर्वपादयमकम् ]

अक्रूरा ॥८०९॥

यां वीक्ष्यैव सुदुष्टोऽपि जनः स्वां प्रकृतिं क्षणम् ।
घूर्णितो वा जहात्येषाऽक्रूरा मनसि राजताम् ॥९॥

ग्रहवती ॥८१०॥

ग्रहा यत्र स्फुरन्त्येते न तैः संस्पृश्यतेऽपि या ।
व्योमेवैका जयत्येषा ग्रहवत्यपि निर्ग्रहा ॥१०॥

[ अचतुर्थोऽयम् ]

विग्रहा ॥८११॥

संगृहीतकृतकर्मसञ्चया दुर्ग्रहग्रहसुनिग्रहाभयाः ।
यज्जनाः कृतपरिग्रहाः श्रिया विग्रहा जयति सा ग्रहेश्वरी ॥११॥

ग्रहवर्जिता ॥८१२॥

ग्रहैः स्वप्नेऽप्यसंस्पृश्यो यद्भक्तिविषदाशयः ।
तत्किं चित्रं स्वयं सापि यद्देवी ग्रहवर्जिता ॥१२॥

रोहिणी ॥८१३॥

रोहिणीरमणशेखरोज्ज्वला मोक्षधामपथिकाधिरोहिणी ।
रोहिणीतनयपूजिताजिता केवला जयति सैव रोहिणी ॥१३॥

भूमिगर्भा ॥८१४॥

यद्गर्भवासात् प्रविमुक्तिमाप्त्वा
बीजं फलत्वं प्रतियात्यपूर्वम् ।
नानात्वसंदर्भकलैकदक्षा
सा भूमिगर्भा जयति प्रगल्भा ॥१४॥

कालभूः ॥८१५॥

कालोऽपि यां व्याप्य भवत्यकस्मा-
दकालकालः समुपैति नैव ।
यद्भक्तिशालं सुविशालतालं
सा कालभूर्बाल्यकलादिलोला ॥१५॥

कालवर्तिनी ॥८१६॥

कालो यां लङ्घते नैव शिरश्छायां यथा पदम् ।
यत्कालवर्तिनी सापि तद्वर्ती तन्न को भवेत् ॥१६॥

कलङ्करहिता नारी ॥८१७॥

न सुरी नासुरी नान्या विलासोल्लसिता तथा ।
कलङ्करहिता नारी यथेयं हरते मनः ॥१७॥

चतुष्षष्ट्यभिधावती ॥८१८॥

चतुर्वर्गफलावाप्त्यै चतुर्मुखमुखस्तुता ।
चतुराशाप्रसिद्धेयं चतुष्षष्ट्यभिधावती ॥१८॥

जीर्णा ॥८१९॥

वृकोदरो वायुभवोऽपि पाण्डवो
यद्ध्यानतोऽन्नं नरदेहसङ्गतः[1] ।
जीर्णीचकारान्यविचिन्त्यतातिगं
जीर्णा भवाजीर्णमियं व्यपोहताम् ॥१९॥

---

१. ख. ग. 'नरदेव' पाठः ।

जीर्णवस्त्रा ॥८२०॥

इदं पतिव्रतौचित्यं पत्युर्यद्भगवत्यपि ।
दिग्वस्त्रस्यानुवृत्त्यै सा जीर्णवस्त्राभवन्नवा ॥२०॥

नूतना ॥८२१॥

जानाति यातिशयवृद्धपितामहादि-
भावं हतादिरनुभूतिकलान्तवृत्तिः ।
अद्यापि चित्रमतिलङ्घितषष्ठभावा
सा नूतनैव जगतां जननी भवानी ॥२१॥

नववल्लभा ॥८२२॥

स्थाणुः शूल्यपि यल्लाभात् सरारिः परमेश्वरः ।
मृत्युञ्जयो जयत्येषा शाङ्करी नववल्लभा ॥२२॥

अरजाः ॥८२३॥

राजेराजरराजारिराज्याजिजिज्जराजरा ।
रजोजाराजर्जरौजा राजराजाजराऽरजाः ॥२३॥

[ द्व्यक्षरोऽयम् ]

रतिः ॥८२४॥

सर्वत्रैव विशिष्यसेऽत्र रतिरित्येषा सदा नर्मदे
ग्रस्तो यत्कलयाभजन्नरहरिर्लक्ष्मीं स्ववक्षस्थलम् ।
विश्वेशः कृतवान् गिरं स्वरसनावासां च पुत्र्या गिरे-
रेको वा सपरिग्रहोऽपि विषमो देवोऽतुलं भूधरे ॥२४॥

( चक्रबन्धोऽयम् ) एतन्न्यासः



प्रीतिः ॥८२५॥

या काचिद्रचितेतरेण हरते स्वात्मेतरत्वं परं
या ध्याता कलयैकयाखिलकला विसारयत्यन्यतः ।
या सर्वस्य रसस्य कृष्टवसुधा दुर्दृष्टसंहारिणी
सर्वैः प्रीतिरिहास्तु सर्वकलया सर्वत्र नः सर्वदा ॥२५॥

रतिरागविवर्द्धिनी ॥८२६॥

रतिरागविवर्द्धिनी यमारा-
ल्ललिता सर्वकलासु लालयन्ती ।

सफलं विमलातिखेललोला
ललनास्तं न हरन्ति जातु चित्रम् ॥२६॥

पञ्चवातगतिर्भिन्ना ॥८२७॥

एकदेहे श्रिता रीतिं स्वस्वकर्मैकचातुरीम् ।
पञ्चवातगतिर्भिन्नाभिन्ना चेन्न पुनर्भयम् ॥२७॥

पञ्चश्लेष्माशया धरा ॥८२८॥

जग्धिपानरसोल्लासविस्रब्धविमलाधरा ।
श्लेष्मामयान् हरत्वेषा पञ्चश्लेष्माशया धरा ॥२८॥

पञ्चपित्तवती शक्तिः ॥८२९॥

अन्यान्यवर्णतां यान्ति यज्ज्वालाभी रसादयः ।
पञ्चपित्तवती शक्तिः पित्तामयहरास्तु नः ॥२९॥

पञ्चस्थानविबोधिनी ॥८३०॥

अबोधबोधजननी सर्वभावैकसाक्षिणी ।
एकं हृत्स्थानमाश्रित्य पञ्चस्थानविबोधिनी ॥३०॥

उदक्या ॥८३१॥

गत्वाग्रतो मारहरं विमोह्य
निधाय तत्स्वं मथितं निजान्तः ।
अरिष्टयाता च कुमारजन्मा-
नन्देन तृप्ता जयतादुदक्या ॥३१॥

१. ग. 'कृतो' पाठः ।

वृषस्यन्ती ॥८३२॥

भवेन्न चेद् वृषस्यन्ती सर्वोत्तमबलाबला ।
कृशानुरेतसश्चेतस्तत्कथं सा हरेत् क्षणात् ॥३२॥

बहिःप्रस्रविणी त्र्यहम् ॥८३३॥

उपरागे नदीवाशु शुचिरप्यशुचित्वगा ।
स्वस्वकाले जयत्येषा बहिःप्रस्रविणी त्र्यहम् ॥३३॥

रजःशुक्रधरा शक्तिः ॥८३४॥

अपि सर्वगतं जीवं नियन्त्रयति यैकतः ।
रजःशुक्रधरा शक्तिः शक्तिसक्तिं ददातु नः ॥३४॥

जरायुः ॥८३५॥

बीजवद् वहति यान्तरा द्रुमं स्वल्प[१]भूर्जगदनल्पदेहवत् ।
सा जरायुरजरायुरक्षयं क्षिप्रमेव वितरत्वलं घनम् ॥३५॥

गर्भधारिणी ॥७३६॥

चतुर्विधस्वरूपेयं सृष्टिराविष्कृता यया ।
असामान्या न सा मान्या कस्य वा गर्भधारिणी ॥३६॥

त्रिकालज्ञा ॥८३७॥

त्रयः काला विभासन्ते सम्प्रत्येव यदग्रतः ।
त्रिकालज्ञा जयत्येषा त्रिदेवीकालचेतना ॥३७॥

त्रिलिङ्गा ॥८३८॥

शब्दानां ज्ञायतेऽन्योन्यं समं सुप्समुदायिनाम् ।
पृथक्प्रथा यदाश्रित्या त्रिलिङ्गा जयतादियम् ॥३८॥

---

१. ख. ग. 'स्वर्णभूः' पाठः ।

त्रिमूर्तिः ॥८३९॥

जाग्रद्बाल्याद्यवस्थासु ययान्य इव जायते ।
जनः सोऽपि मनस्त्राणं त्रिमूर्तिर्जयतान्मम ॥३९॥

त्रिपुरवासिनी ॥८४०॥

वाक्कामशक्तिवर्णानि संजपन् यत्प्रसादतः ।
वाक्कामशक्तिनाथः स्यात् सेयं त्रिपुरवासिनी ॥४०॥

अरागा ॥८४१॥

अरागापि महेशानं रागिणं याकरोदरम् ।
स्वस्वातन्त्र्यकलातालललितां नौमि तां शिवाम् ॥४१॥

शिवतत्त्वा ॥८४२॥

सुदुर्भवं भवं कृत्वा तस्यैवान्तः प्रविश्य च ।
तथापि या स्वशीलस्था शिवतत्त्वेति सा मता ॥४२॥

कामतत्त्वानुरागिणी ॥८४३॥

कामादिवासनातीतैः कमनीयस्वभावभूः ।
कामारिदयिता जीयात् कामतत्त्वानुरागिणी ॥४३॥

प्राची ॥८४४॥

लोक्यं समालोकयतापि यस्यां
लोकत्वमायाति सदोदितेन ।
इनेन वृत्रारिबलाञ्चिता दिक्
प्राची शुचं लुम्पतु सर्वतो नः ॥४४॥

अवाची ॥८४५॥

अन्तकोऽपि यदाश्रित्या प्रेतेशोऽपि विराजते ।
समवर्तित्ववर्णेन दिगवाचीति सा मता ॥४५॥

प्रतीची ॥८४६॥

प्रचेता अचलावासो यत्र सत्त्वबलाकुलः ।
प्रतीची दिग् हरत्वेषा पुनः प्रत्यग्जनिं मम ॥४६॥

उदीची ॥८४७॥

यदुपासनया भिक्षुसखोऽपि स धनाधिपः ।
राजराजः कुबेरोऽपि दिगुदीचीति सा मता ॥४७॥

विदिग्दिशाम् ॥८४८॥

यदाश्रयात् पावक आश्रयाशो
रक्षोऽधिपः पुण्यजनः प्रभञ्जनः ।
प्राणो जनस्योग्र इहापि शम्भु-
दृशः प्रसत्त्यै भवताद् विदिग्दिशाम् ॥४८॥

अहंकृतिः ॥८४९॥

प्रकृताप्रकृतप्रज्ञाशालिनी देवदेवता ।
त्रिविधाहंकृतिर्जीयाद् विश्वैकप्रसवस्थली ॥४९॥

अहंकारा ॥८५०॥

अहंकारानिवार्यासि यदि तन्मयि शाम्भवि ।
तिष्ठ हृष्टमतौ नित्यं परमैव भ्रमापनुत् ॥५०॥

बलिमाया ॥८५१॥

विष्णुं वामनतां नीत्वा त्रिजगल्लङ्घिनीं बलिम् ।
हन्त यातोषयद्देयाद् बलिमायातुलं बलम् ॥५१॥

बलिप्रिया ॥८५२॥

बलिप्रिया जयत्येषा सर्वलोकेश्वरं हरिम् ।
यास्थापयदधोलोके द्वाराग्रे नियतं बलेः ॥५२॥

स्रुक् ॥८५३॥

ध्रुवं स्रुगेव सा देवी पूर्णया याहुतिश्रिया ।
वह्निं सन्दीप्य सन्दीप्य यज्वचित्तैकनन्दिनी ॥५३॥

स्रुवा ॥८५४॥

बर्हिर्मुखगणस्यैषा तृप्तिकारणमुत्तमम् ।
विविधाहुतिभिर्जीयात् स्रुवा सन्मन्त्रपूजिता ॥५४॥

सामिधेनी ॥८५५॥

पठ्यते मन्त्रविद्भिर्यादौ वह्निसमिन्धनी ।
या वेदऋग्जयत्येषा सामिधेनी महेश्वरी ॥५५॥

सश्रद्धा ॥८५६॥

नित्ये नैमित्तिके काम्ये सश्रद्धं या प्रपूज्यते ।
वेदसारार्थविद्भिः सा सश्रद्धेति प्रकीर्तिता ॥५६॥

श्राद्धदेवता ॥८५७॥

पितरोऽदृष्टिविषया अपि तृप्तिमनुत्तमाम् ।
कव्येन कृपया यस्या यान्ति सा श्राद्धदेवता ॥५७॥

माता ॥८५८॥

स्तन्येन पुण्येन वदन्यनाथा
या पालयन्ती च सुलालयन्ती ।
शिशुं भृशं सा परमेश्वरी नो
माताहताशत्वकरी सदास्तु ॥५८॥

मातामही ॥८५९॥

अहीनकुलमूलैकमहीतलविलासिनी ।
जननीजननी मातामही जीयान्महेश्वरी ॥५९॥

तृप्तिः ॥८६०॥

उप्तं बीजमिवाहारः क्लृप्तो धातुफलोद्धृतौ ।
अन्ततो यामुपास्ते सा तृप्तिरङ्गप्रसुप्तिहृत् ॥६०॥

पितृमाता ॥८६१॥

सप्तधातुमयेनेह देहेनाविष्कृतं यया ।
पित्राख्यं निर्वपुर्धाम पितृमातेति सा मता ॥६१॥

पितामही ॥८६२॥

यत्प्रभावाद् भवोऽयं न आविर्भूतोऽतिहर्षदः ।
भूतः स प्रभवो यस्या महतीयं पितामही ॥६२॥

स्नुषा ॥८६३॥

सफलं विमलं यस्याः सुशीलात् सत्कुलं भवेत् ।
विशालाक्षी जयत्येषा स्नुषाक्लृशमहोदया ॥६३॥

दौहित्रिणी ॥८६४॥

दौहित्रिणी सतां मान्या कुलोद्धारणकारणम् ।
दुहिता यत्प्रसादेन देवी दौहित्रिणीति सा ॥६४॥

पुत्री ॥८६५॥

अचलाधिपतिस्तस्मात् प्रथितः स हिमालयः ।
यदेषा तद्गृहे पुत्री भूता कापि जगत्प्रसूः ॥६५॥

पौत्री ॥८६६॥

अतिपुत्रस्य या प्रेम्णः पात्रभूता सतां मता ।
पौत्रीयं परमेशानी पवित्रीकुरुतां कुलम् ॥६६॥

नप्त्री ॥८६७॥

संसारदुःखदलने परमास्त्रं महेश्वरी ।
नप्त्रीति प्रथिता देवी भूयाद् भूत्यै च तुष्टये ॥६७॥

शिशुप्रिया ॥८६८॥

अशेषविघ्नशमने शिशूनां विहितोद्यमा ।
शिशुप्रिया जयत्येषाकृशाशावशवर्तिनी ॥६८॥

स्तनदा ॥८६९॥

सा येन स्तनदा भक्त्या सायेन सुखदा भवे ।
धन्येन पूजिता न स्यात् सोऽन्येन तुलिताननः ॥६९॥

[ मुरजबन्धः ]

एतन्न्यासः




स्तनधारा ॥८७०॥

यस्मिन् दिष्टेऽमृताम्नाद्यमपि जन्तोर्न तृप्तये।
तत्रेयं जयतीशानी स्तनधारैव केवला ॥७०॥

विश्वयोनिः ॥८७१॥

केवलो जलजयोनिरप्यसौ
यद्दयाधिगतचातुरीयकः।
विश्वतः सृजति विश्वमद्भुतं
विश्वयोनिरियमस्त्वयोनिकृत् ॥७१॥

स्तनन्धयी ॥८७२॥

कथं न स्यात् परं तस्य विशालं विमलं कुलम्।
यस्य संनिहिता नित्यं गेहे देवी स्तनन्धयी ॥७२॥

शिशूत्सङ्गधरा ॥८७३॥

हृष्टः पुष्टोऽपि भात्येष यदुत्सङ्गे जगच्छिशुः।
शिशूत्सङ्गधरा जीयाद्धराधरसुता शिवा ॥७३॥

दोला ॥८७४॥

लोललोलदलोद्दाललीलादादलदाददा ।
दुद्ददुल्लादलाद्दोला दाददालं ललाददा ॥७४॥

[ द्व्यक्षरोऽयम् ]

दोलाक्रीडाभिनन्दिनी ॥८७५॥

सर्वस्य चित्तवृत्तिस्तद्दोलाक्रीडाभिनन्दिनी ।
यच्छैलनन्दिनी सापि दोलाक्रीडाभिनन्दिनी ॥७५॥

उर्वशी ॥८७६॥

वशी वशीकृतो देवगणोऽन्यत्र यया न सः ।
विहायेव दिवं याति सा भूयादुर्वशी श्रिये ॥७६॥

कदली ॥८७७॥

कदलीसाम्यमावेक्ष्य स्वोर्वोरन्यत्र सर्वतः ।
किम्नु सा कदली भूता कदनं हरतां कलेः ॥७७॥

केका ॥८७८॥

कौ कौ काकाः कोककङ्ककाककाः केकुकाककाः ।
केकाककककाङ्कोकाकेकैकाकाककीः ककम् ॥७८॥

[ एकाक्षरः ]

विशिखा ॥८७९॥

यज्जना जनतां ज्ञानशिखिनः शिखितेजसः ।
पुनन्त्याशिखमीत्ताभिर्विशिखा सास्तु वः श्रिये ॥७९॥

शिखिनर्तिनी॥८८०॥

उदरेण धृतः पुत्रो यो मया सोऽयमुह्यते ।
पृष्ठेऽनेन सदेत्येषा सन्तुष्टा शिखिनर्तिनी ॥८०॥

अथवा

निरिन्धनः कथं दीप्तस्त्रिनेत्राग्निः सदा भवेत् ।
यद्यर्धाङ्गगता न स्याद्देवता शिखिनर्तिनी ॥

खट्वाङ्गधारिणी ॥८८१॥

एतत् सधर्मिणीप्रेम जयत्येव यदीश्वरी ।
खट्वाङ्गिनोऽसमाक्षस्य प्रीत्यै खट्वाङ्गधारिणी ॥८१॥

खट्वा ॥८८२॥

यामाश्रित्य सुखं शेते श्रान्तः पितृवनस्थले ।
भिक्षुर्जयति सा काचित् खट्वा नित्यमखण्डिता ॥८२॥

बाणपुङ्खानुवर्तिनी ॥८८३॥

दहेदेकः कथं शीघ्रं त्रिपुरारिः पुरां त्रयम् ।
त्रिपुरा चेत् सहाया न बाणपुङ्खानुवर्तिनी ॥८३॥

लक्ष्यप्राप्तिः ॥८८४॥

यदुपासकमेकं वा लक्ष्यलोकाः स्तुवन्त्यलम् ।
लक्ष्यकृत्वो जयत्येषा लक्ष्यप्राप्तिः सुलक्षणा ॥८४॥

कला ॥८८५॥

कुलाकुलकलाकेलिलोलालीककलाकला ।
कालकाककिलेलाला काले कलौ कलाकला ॥८५॥

[ द्व्यक्षरोऽयम् ]

अलक्ष्या ॥८८६॥

अन्तर्लक्ष्या बहिर्लक्ष्या लक्ष्यालक्ष्यत्ववर्जिता ।
लक्ष्यलक्षणताद्वैतलक्ष्यालक्ष्या जयत्यसौ ॥८६॥

लक्ष्या ॥८८७॥

या भागलक्षणाविद्भिर्लक्ष्यते बोधलक्षणा ।
लक्ष्यभूतापि सैकैव लक्ष्या सर्वविलक्षणा ॥८७॥

शुभलक्षणा ॥८८८॥

क्षणे क्षणे स्मृता येन देवता शुभलक्षणा ।
अनेककल्पसंकल्पो धन्यस्यास्य क्षणायते ॥८८॥

वर्तिनी ॥८८९॥

विवर्तिनी जगत्त्वेन भावाभावप्रवर्तिनी ।
वर्तिनी देवता भूयान्नित्यं हृदयवर्तिनी ॥८९॥

सुपथाचारा ॥८९०॥

सेविता सुपथाचारा येन नित्यं महेश्वरी ।
तत्पथं न कथं सर्वे गच्छेयुर्नार्थिता अपि ॥९०॥

परिखा ॥८९१॥

ब्रह्माण्डमण्डलं व्याप्य पञ्चभूतस्वरूपिणी ।
या तिष्ठति परा निष्ठा परिखा सा स्मृता बुधैः ॥९१॥

खनिः ॥८९२॥

सप्तधा कृतिनां तुष्टा दारिद्र्यदलनी शिवा ।
दुर्गदुर्गत्वहेतुश्च जीयात् खनिरियं सदा ॥९२॥

---

१. ख. ग. 'श्रिया' पाठः ।

वृतिः ॥८९३॥

प्रोच्छिता अपि मेघेन वातार्कस्फुटिता अपि ।
अगाः पुष्टाः कथं स्युश्चेन्न स्याद्रक्षाकरी वृतिः ॥९३॥

प्राकारवलया ॥८९४॥

केन केन प्रकारेण जन्तूनां क्लेशनाशिनी ।
प्राकारवलया देवी भाससे दयया स्वया ॥९४॥

वेला ॥८९५॥

वेला रसासारलावे लामताललतामला ।
रता रतातारतारसालताललतालसा ॥९५॥

[ सर्वतोभद्रोऽयम् ]

एतन्न्यासः

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| वे | ला | र | सा | सा | र | ला | वे |
| ला | म | ता | ल | ल | ता | म | ला |
| र | ता | र | ता | ता | र | ता | र |
| सा | ल | ता | ल | ल | ता | ल | सा |
| सा | ल | ता | ल | ल | ता | ल | सा |
| र | ता | र | ता | ता | र | ता | र |
| ला | म | ता | ल | ल | ता | म | ला |
| वे | ला | र | सा | सा | र | ला | वे |

मर्यादा च महोदधौ ॥८९६॥

यत्कृपातो विभागेन जलं स्थलमपीयते ।
जयत्येकैव सा देवी मर्यादा च महोदधौ ॥९६॥

पोषणी शक्तिः ॥८९७॥

यया साम्राज्यसम्भारः सुधियोऽपि तृणायते ।
पोषणी शक्तिरेषैव जयति प्रकृतिप्रभा ॥९७॥

शोषणी शक्तिः ॥८९८॥

गम्भीरोऽपि सुविस्तारः कुम्भजेनार्णवः क्षणात् ।
शोषितो यां समाराध्य शोषणी शक्तिरित्यसौ ॥९८॥

दीर्घकेशी ॥८९९॥

दीर्घभ्रूलतिका दीर्घमुखी दीर्घेक्षणा शिवा ।
दीर्घं कालं मदग्रेऽस्तु दीर्घकेशी सुसेविता ॥९९॥

सुलोमशा ॥९००॥

सद्गुणा यद्धृदाकाशे सुसम्बाधस्थिता इव ।
लोमव्याजाद् बहिर्याताः शक्तिरेषा सुलोमशा ॥१००॥

स्वस्वातन्त्र्यपरानुभूतिकलयावश्यंभवित्र्योद्गते
साहिब्कौलइतिप्रथावति पदे निर्माति यः सासनम् ।
चित्रैः पद्यगणैर्विभासिततनूरन्यानवाप्यस्थितौ
काव्ये तस्य विलासनाम्नि विरतिं भक्तिश्चतुर्दश्यगात् ॥

इति श्रीमहामाहेश्वराचार्यवर्यसाहिबकौलानन्दनाथविरचिते
नामविलासे चतुर्दशी भक्तिः ॥१४॥

## पञ्चदशी भक्तिः

ललिता ॥९०१॥

तारसंग्रथितालोककलोता ललिता तता।
तातताकलिताभेददभेता हृदि संरता ॥१॥

(पद्मबन्धोऽयम्)




मांसला ॥९०२॥

यदङ्गैकलावण्यपूरच्छटाभिः
सुसम्बाधदेशस्थितेवोद्भटाभिः

बहिस्त्र्यध्वगा सा विनिर्याति शम्भोः
शरीरात् परं देवता मांसलेयम् ॥२॥

तन्वी ॥१०३॥

ध्यायन्ति यामणौ चित्ते त्रिजगज्जननीमपि ।
गिरीन्द्रनन्दिनीं भक्ताः मा तन्वीति मताद्भुता ॥३॥

वेदवेदाङ्गधारिणी ॥१०४॥

वेद्यवेदकताहीना पञ्चाम्नायैक्यवेदिनः ।
या चित्ते स्फुरतीशी सा वेदवेदाङ्गधारिणी ॥४॥

नरासृक्पानमत्ता ॥१०५॥

संख्यप्रेतमहाभूमीमाध्यास्याध्यासवर्जिता ।
नरासृक्पानमत्तैव जयतीशानगेहिनी ॥५॥

नरमुण्डास्थिभूषणा ॥१०६॥

अस्थिभूषागतां लज्जामाकलय्य प्रियस्य किम् ।
महार्हाभूषणा भूता नरमुण्डास्थिभूषणा ॥६॥

अक्षक्रीडारतिः ॥१०७॥

मोहितः स यया सत्यसुतोऽपि हरिवत्सलः ।
अहारयत् स्वसाम्राज्यं साक्षक्रीडारतिः शिवा ॥७॥

शारी ॥१०८॥

जयो हितेन पातेन नहितेन पराजयः ।
यस्या जयत्यसौ शारी सारासारविचारभूः ॥८॥

शारिका शुकभाषिणी ॥९०९॥

समाधेर्भ्रंशितः शम्भुरालपन्त्या कलं कलम् ।
अनङ्गारिर्यया सैव शारिका शुकभाषिणी ॥९॥

शाम्बरी ॥९१०॥

चित्रेन्द्रजालं द्वितयत्वमैक्ये
द्वैतेऽपि चैक्यं तनुतेऽतनुज्ञा ।
क्षणं क्षणं या बहिरन्तरापि
सा शाम्बरी मोहहरी सदास्तु ॥१०॥

गारुडी विद्या ॥९११॥

महाविषाकुशं दूराद् भुजङ्गगणमद्भुतम् ।
कर्षन्ती गारुडी विद्या सिद्धा चेन्न पुनर्भयम् ॥११॥

वारुणी ॥९१२॥

प्रचेता जडराजोऽपि यत्प्रसत्त्या[1] महोद्धतम् ।
नियामयति सत्त्वेशं सा जीयाद् वारुणी शिवा ॥१२॥

वरुणार्चिता ॥९१३॥

नित्यं कमलमालाभिः कमले कमलेऽतुला ।
कमलेशस्तुता सास्तु कमले वरुणार्चिता ॥१३॥

वाराही ॥९१४॥

यामाराध्य निराधारो जलमग्नां वसुन्धराम् ।
कोल उद्धारयामास वाराही सा हिनस्त्वघम् ॥१४॥

---

१. क. ख. ग. 'यत्र सत्ता' पाठः ।

मुण्डहस्ता ॥९१५॥

धावन्त्यभिमुखं दैत्यगजस्य विमुखस्य सा ।
भीतस्य मुण्डहस्ता मामवताद्रणसङ्कटे ॥१५॥

दंष्ट्रोद्धृतवसुन्धरा ॥९१६॥

त्वमेव कोलरूपासीद्दंष्ट्रोद्धृतवसुन्धरा ।
सत्त्वाधमोऽन्यथा कोल उद्धरेत् तां कथं शिवे ॥१६॥

मीनमूर्तिधरा ॥९१७॥

यया ते विधृता देवमुनीन्द्राः प्रलयागमे ।
ससर्वजीवबीजाः सा मीनमूर्तिधरा मता ॥१७॥

मूर्ता ॥९१८॥

सृष्ट्यै स्थित्यै तथा हृत्यै मूर्ता शक्तिरिवेशितुः ।
अतुल्यबलदा साविर्भूता मूर्ता निराकृतिः ॥१८॥

वदन्या ॥९१९॥

यमाप्य तुच्छो भवबुद्बुदोऽयं
न दृक्पथे स्याद् वितरस्यमुं तम् ।
स्वकामकामं यदकाममस्मा-
ययतो वदन्या कतमा त्वदन्या ॥१९॥

प्रतिमाश्रया ॥९२०॥

त्वमीशि कारुण्यनिधिर्नवापि
जडं विधायातिमृदुं तदर्थम् ।
सर्वाश्रया कापि निराश्रयापि
भूतासि देवी प्रतिमाश्रयापि ॥२०॥

अमूर्ता ॥९२१॥

प्रियाष्टमूर्तेर्दशमूर्तिनापि
ध्याता सदैवाकृतकैकमूर्त्तिः ।
स्फूर्तिं चिदानन्दमयीममूर्ता
धूर्तत्वहर्त्रीं वितरत्वियं नः ॥२१॥

निधिरूपा ॥९२२॥

निधिरूपा ददात्वेषा निरुपाधिविधिं निधिम् ।
सन्निधिं हृदयाकाशे विदधातु च नः सदा ॥२२॥

सालिग्रामशिला शुचिः ॥९२३॥

मीयते केन सा श्यामा सालिग्रामशिला शुचिः ।
यत्र सत्त्वशुचिः कृष्णः क्षणं रक्तोऽभवद्धरिः ॥२३॥

स्मृतिः ॥९२४॥

वेदश्चतुर्धा प्रथितश्चतुर्भि-
रर्थैरनन्तोऽनवगाहनीयः ।
प्रकाशितो यद्वशगैर्मुनीन्द्रैः
स्मृतिः स्मृतिं तत्पदगां ददातु ॥२४॥

संस्काररूपा ॥९२५॥

पदानि वर्णैश्च पदैश्च वाक्यं
निरूप्यते यद्वयान्तयातैः ।
स्फोटस्वरूपानृतरूपहीना
संस्काररूपार्पयतु स्वरूपम् ॥२५॥

सुसंस्कारा ॥९२६॥

प्राक्तनाद्यतनी वापि सिद्धा यस्य हृदि स्वयम् ।
सुसंस्कारा बहूनां न वाचकः स कथं भवेत् ॥२६॥

संस्कृतिः ॥९२७॥

वेदो यया बोधयतीह देवान्
देवा यया भक्तजनान् प्रहृष्टाः ।
विद्याधराणामधिदेवतेयं
जिह्वाग्रयाता भव संस्कृतिर्नः ॥२७॥

प्राकृता ॥९२८॥

अप्राकृतां पिङ्गलनागराजो
यां भूरिजिह्वः प्रकटां विधाय ।
वाग्मित्वधारामलमारुरोह
सा प्राकृता नाटकवित्तिदास्तु ॥२८॥

देशभाषा ॥९२९॥

अनेकशब्दैरमलाभिधत्ते सर्वेश्वरी सर्वत एकमर्थम् ।
या मातृकारूपनिरूपणीया सा देशभाषाकुशबोधदास्तु ॥२९॥

गाथा ॥९३०॥

या त्रिभिश्चरणैः षड्भिरपि धन्यैः प्रगीयसे ।
थाथेति विविधाकारा गाथा नाथस्व नाथताम् ॥३०॥

गीतिः ॥९३१॥

एकमर्थं विदन्तीह यां निशम्य जडाजडाः ।
विवशा वशिनः सैव गीतिरित्यभिधीयते ॥३१॥

प्रहेलिका ॥१३२॥

गोष्ठीषु चेष्टते हृष्टया या वादिमुखभञ्जनी ।
रञ्जनी सुधियां दद्याद्धेलामत्र प्रहेलिका ॥३२॥

इडा ॥१३३॥

यद्भागे वहते चन्द्रः सान्द्रानन्दसुधाम्बुधिः ।
अहो बिन्दुविधी रीडामिडा हरतु सत्वरम् ॥३३॥

पिङ्गला ॥१३४॥

यद्भागे वहते सूरः सूरिभिर्वेद्यवैभवः ।
बीजपूराद्भुता वामा पिङ्गला दक्षिणावतु ॥३४॥

पिङ्गा ॥१३५॥

गङ्गातरङ्गरङ्गेयं भृङ्गालिमधुरध्वनिः ।
त्रिलिङ्गेष्विङ्गितं दद्यात् पिङ्गालिङ्गितशङ्करा ॥३५॥

सुषुम्णा ॥१३६॥

अग्नीषोमस्वरूपेयं ज्येष्ठानिष्ठाप्रदा सताम् ।
शून्या नशून्या बोधेन सुषुम्णाऽनादिनादिनी ॥३६॥

सूर्यवाहिनी ॥१३७॥

वामेनापूर्य येनान्तर्निकुम्भ्यान्येन रेच्यते ।
सा सूर्यवाहिनी तं नोद्वाहयेद् भववाहिनी[2] ॥३७॥

शशिस्रवा ॥१३८॥

सूर्यबिम्बं समाबध्य येन देवी वशीकृता ।
शशिस्रवा न पीड्येत स जरामरणादिभिः ॥३८॥

---

१ ख. ग. 'गता' पाठः । २ ख. ग. 'भवभाविनी' पाठः ।

विश्वरूपा ॥९५३॥

विश्वं भूतं यतो यस्यां यल्लयं च यदात्मकम् ।
विश्वरूपा परा काचित् चित्स्वरूपा जयत्यसौ ॥५३॥

चिदानन्दा ॥९५४॥

विदितेयं चिदानन्दा सुन्दरी यस्य धीमतः ।
पुरन्दरेन्दिराप्यस्य वन्ध्यैव स्वान्तलालने ॥५४॥

परब्रह्मप्रबोधिनी ॥९५५॥

शोधिनी मोहतमसो द्वैताद्वैतविरोधिनी ।
रोधिनी सर्वकामानां परब्रह्मप्रबोधिनी ॥५५॥

निर्विकारा ॥९५६॥

नानाकारविकारौघं विश्वं सृष्ट्वा च विश्वतः ।
तत्र स्वं विनिवेश्यैका निर्विकारैव काचन ॥५६॥

निर्वैरा ॥९५७॥

सपत्न्यामपि गङ्गायां विधौ वक्राधमेऽपि सा ।
अपि पत्युः शिरः स्थित्या निर्वैरा जयतीश्वरी ॥५७॥

विरतिः ॥९५८॥

स्वात्मजेऽपि सधर्मिण्यां गृहे सुहृदि बन्धुषु ।
यदाविष्टो रतिं नान्ते लभते विरतिर्हि सा ॥५८॥

सत्यवर्धिनी ॥९५९॥

कलौ कलङ्ककलुषे दुष्कलाकलितेऽतुला ।
भूयात् सा परमेशानी जनानां सत्यवर्द्धिनी ॥५९॥

पुरुषाज्ञा ॥९६०॥

पुरुषाज्ञास्त्यलङ्घ्येयं यदि सत्यं महेश्वरी ।
अज्ञानखण्डने ज्ञानमण्डनेऽप्यस्तु नः स्थिरा ॥६०॥

भिन्ना ॥९६१॥

तत्त्वात्मना शिवा भिन्ना जयतीयं भवोन्मुखी ।
तत्त्वात्मनाप्यभिन्नैव जयतीयं भवोन्मुखी ॥६१॥

क्षान्तिः कैवल्यदायिनी ॥९६२॥

चित्ताम्भोधिस्तरङ्गौघैस्तावत् क्षोभयते जनम् ।
यावन्नैषा श्रिता भक्त्या क्षान्तिः कैवल्यदायिनी ॥६२॥

विविक्तसेविनी ॥९६३॥

विविक्तसेविनी भावं वितर स्वं महेशि मे ।
येन विश्वगतोऽप्येष जातु विश्वं न भावये ॥६३॥

प्रज्ञाजनयित्री ॥९६४॥

जयतीयं शिवा साक्षादज्ञानां ज्ञानकारणम् ।
पराऽपरा सदा प्रज्ञाजनयित्री महेश्वरी ॥६४॥

बहुश्रुतिः ॥९६५॥

विस्मयाय न कस्येयं महेशानी बहुश्रुतिः ।
एकतो नैकवर्णा या नैकतोऽप्येकवर्णभाक् ॥६५॥

निरीहा ॥९६६॥

सुधिया मीयते केन निरीहा परमेश्वरी ।
यया सर्वं विधायापि न किंचिच्च विधीयते ॥६६॥

समस्तैका ॥९६७॥

यस्या विवर्तरूपेण विश्वमाभात्यतद्विदाम् ।
तद्विदां च स्वरूपेण समस्तैका जयत्यसौ ॥६७॥

सर्वलोकैकसेविता ॥९६८॥

चतुर्वर्गफलावाप्त्यै यथाभिमतमीश्वरी ।
एकचित्ततया जीयात् सर्वलोकैकसेविता ॥६८॥

सेवा ॥९६९॥

हताभिमानैर्निस्तन्द्रैरभ्यस्तेयं यथारुचि ।
सेवोत्तरोत्तरं कार्या कलावेका फलप्रदा ॥६९॥

सेवाप्रिया ॥९७०॥

दिशि देशे क्रतौ काले यथायथमुपास्यते ।
तथा तथा ददातीयं फलं सेवाप्रिया शिवा ॥७०॥

सेव्या ॥९७१॥

यां विज्ञाय तृणायन्ते सकलाः सिद्धयः सताम् ।
सा सेव्या सर्वभावेन कथं नैवेह काचन ॥७१॥

सेवाफलविवर्द्धिनी ॥९७२॥

यस्य तुष्टा शिवा सत्यं सेवाफलविवर्धिनी ।
सेवन्ते तत्पदाम्भोजं कथं नैव नरोत्तमाः ॥७२॥

कलौ कल्किप्रिया काली ॥९७३॥

एको विप्रशिशुर्नैकम्लेच्छान् दुष्टान् कथं हरेत् ।
कलौ कल्किप्रिया काली तेन नाराध्यते यदा ॥७३॥

दुष्टम्लेच्छविनाशिनी ॥९७४॥

पुरा सुरभिरूपेण म्लेच्छानुत्पाद्य कापि सा ।
पुनः कालीस्वरूपेण दुष्टम्लेच्छविनाशिनी ॥७४॥

प्रत्यञ्चा ॥९७५॥

कर्णावतंसतां नीता बाणेन कतिभिः क्षणात् ।
लक्ष्यप्राप्तिं करोत्येव प्रत्यञ्चा परितोषिता ॥७५॥

धनुर्यष्टिः ॥९७६॥

धनुर्यष्टिर्जयत्येषा धानुष्काणां करस्थिता ।
ते ते शूरा रिपून् हत्वा यया भूमिभुजोऽभवन् ॥७६॥

खड्गधारा ॥९७७॥

घातकेभ्यो जयं लक्ष्मीं हतेभ्यो या दिवि स्थितिम् ।
ददाति सैव सर्वेषां खड्गधारोपकारकृत् ॥७७॥

दुरानतिः ॥९७८॥

दुरानतिः स्थिता यस्य चित्ते भक्त्याभितोषिता ।
दुरानमा नमन्त्येनं नमस्याश्च सुरोत्तमाः ॥७८॥

अश्वप्लुतिः ॥९७९॥

कारिता याश्ववारेण याने पूर्वं सुशीलिता ।
चमत्करोति सा भूयादश्वप्लुतिरलं श्रिये ॥७९॥

वल्गा ॥९८०॥

यया संसाद्य संसाद्य सादिभिर्वाजिनो जये ।
प्रेर्यन्ते मण्डले याने प्लुतौ वल्गेति सा मता ॥८०॥

सृणिः ॥९८१॥

सूक्ष्मया गुरुमुन्मत्तं यया नागं जनो वशम् ।
नयति स्पर्शतः सैषा सृणिरस्तु घृणापहा ॥८१॥

सन्मत्तवारणा ॥९८२॥

यस्याः पुरःसरा देवी ख्याता सन्मत्तवारणा ।
सा सेना न कथं सद्यो रोचेत रिपुवारणा ॥८२॥

वीरभूः ॥९८३॥

आविर्भूता यतो वीरा यस्यां तिष्ठन्ति यन्मयाः ।
विश्रान्तेः परमा भूमिर्वीरभूर्भुवि पूजिता ॥८३॥

वीरमाता ॥९८४॥

धन्या सा वीरमातैका देवी कामदुघा परा ।
वीरान् या पाति निष्पातान्निर्हेतुप्रेमनिर्भृता ॥८४॥

वीरसूः ॥९८५॥

लोहजातेष्विवादर्शे या स्वात्ममुखदर्शने ।
वीरान् सूते जनानां सा वीरसूः कापि गीयते ॥८५॥

वीरनन्दिनी ॥९८६॥

पञ्चकृत्यकृतः शम्भोः समावेशात् सुनिर्वृताः ।
यद्भक्तास्त्यक्तपञ्चत्वभयाः सा वीरनन्दिनी ॥८६॥

जयश्रीः ॥९८७॥

यासैव तनुते कंचिद् ब्रह्मैक्यविभवं सुखम् ।
जयश्रीः सैव नो भूयात् संनिधौ सर्वतः सदा ॥८७॥

जयदीक्षा ॥९८८॥

स्वप्रतापानले हुत्वा शस्त्रमन्त्रै रिपून् पशून् ।
यद्दीक्षिता जना भान्ति जयदीक्षेति सा शिवा ॥८८॥

जयदा ॥९८९॥

जयदा सर्वदा भूयात् सा जया विजयासखी ।
यथा धनंजयत्वं न आविर्भूयादकृत्रिमम् ॥८९॥

जयवर्द्धिनी ॥९९०॥

किं दुःसाध्यं भवेदस्य सद्यो वैषद्यभागिनः[1] ।
यदि स्यात् सर्वदा सत्यं सहाया जयवर्द्धिनी ॥९०॥

सौभाग्यसुभगाकारा ॥९९१॥

सौभाग्यसुभगाकारा सा ममास्त्वग्रतः सदा ।
कारेवान्तर्गतं चित्तं निश्चलं विदधाति या ॥९१॥

सर्वसौभाग्यवर्द्धिनी ॥९९२॥

यस्याः सर्वस्य शर्वत्वं कृपां प्राप्य क्षणाद् भवेत् ।
सहाया सर्वदा सास्तु सर्वसौभाग्यवर्द्धिनी ॥९२॥

क्षेमङ्करी ॥९९३॥

खिन्नः खिन्नो विमोहेन क्षीणः क्षीणो क्षुधाधिना ।
अद्यास्मि सुखभाक् सद्यो दृष्ट्वा क्षेमङ्करी यदा ॥९३॥

सिद्धिरूपा ॥९९४॥

सिद्धिरूपा स्वरूपेण प्रथिता मय्यसंशयम् ।
अन्यथाखिलसिद्धीशः कथं स्यां स्वात्मसिद्धितः ॥९४॥

---

१ ख. ग. 'भाविनः' पाठः ।

सत्कीर्तिः ॥९९५॥

सर्वत्र सर्वदा भूयात् सर्वतः सर्ववल्लभा ।
सत्कीर्तिः संस्फुरन्ती नो जाता स्याज्ञातता यया ॥९५॥

पथिदेवता ॥९९६॥

गजारूढं रथारूढं हयारूढं जनं दृढम् ।
मृडानी पातु यान्तं वा सर्वदा पथिदेवता ॥९६॥

सर्वतीर्थमयी मूर्तिः ॥९९७॥

सर्वतीर्थविबोधेन तीर्थ्यस्तीर्थवदत्र सः ।
सर्वतीर्थमयी मूर्तिः स्फूर्तिं कुर्याद्यदन्तरा ॥९७॥

सर्वदेवमयी प्रभा ॥९९८॥

अपास्तुं शक्नुयुर्जातु यदादित्यादयो नहि ।
ययास्तं तत्तमोऽप्येषा सर्वदेवमयी प्रभा ॥९८॥

सर्वसिद्धिप्रदा शक्तिः ॥९९९॥

नाविरक्तो विरक्तो न यद्भक्तोऽसक्तचेतनः ।
सर्वसिद्धिप्रदा शक्तिर्जयताज्जयतादियम् ॥९९॥

सर्वमङ्गलमङ्गला ॥१०००॥

धन्याः स्मः कृतकृत्याः स्मो वन्द्याः स्मः सर्वमङ्गलाः ।
यत्सर्वत्र सदा ज्ञाता सर्वमङ्गलमङ्गला ॥१००॥

विविधसत्कृतिलास्यभासितसद्रसासवघूर्णितै-
श्चतुरवर्णितभावभावितनिर्मलोदयकृत्कला ।
प्रथितनामविलासतत्तदधीश्वरत्वविहारिणी
परमशक्तिरियं श्रिया जय सर्वमङ्गलमङ्गला ॥१०१॥

# षोडशी भक्तिः ।

इत्थं शिवेन प्रथितं स्वशक्त्या
नवेश्वरं निर्मलभावबोधम् ।
मयाथ लक्षीकृतलक्ष्यरूपं
न नाम नाम्नुं[1] प्रणमन्ति के के ॥१॥

पठेदनुज्ञामवलम्ब्य भक्त्या
श्रीदैशिकेशस्य परानुभूतेः ।
अन्तः समाधाय नियम्य बाह्यं
हृषीकपूगं च शुचिस्त्रिधापि ॥२॥

तन्त्रोक्तमन्त्राधिकृतौ कृती सन्
द्विस्त्रिः सकृद्वा नियतः प्रगे वा ।
श्रद्धालुरुद्दामसुदेकधामा
ध्यायन्नधीयेत च तं त्रिसन्ध्यम् ॥३॥

पुरो निविष्टः स्तुतिपाठकस्य
समाहितान्तःकरणोऽतिहृष्टः ।

---

१ क. ख. 'नामं' पाठः ।

कृताञ्जलिर्वा शृणुयात् प्रणम्य
संश्रावयेद्वा स्तवराजमेनम् ॥४॥

यत्क्षोभितान्तःकरणोऽतिभार-
भियापि देहं यतते विहातुम् ।
पुष्टं प्रयत्नादपि तत् त्रिरूपं
स्वप्नेऽपि दुःखं नहि संस्पृशेत् तम् ॥५॥

देशादिहान्यापि यदाप्तुकामः
कलङ्कितत्वादि न मन्यते च ।
नरोऽपि वृत्तिं पशुजामुपास्ते
यत्नं विना स्याद्धनधान्यसम्पत् ॥६॥

इनादयो यत्कलिता अधृष्याः
ख्याताः परं यद्वशगोऽपरश्च ।
तानप्यवज्ञाय चरत्यलक्ष्य-
स्तेजस्विता सापि भवेदधीना ॥७॥

एको बहूनस्तपरीकरश्च
तत्सम्भृतानप्यवमन्य चेष्टाम् ।
इष्टां विधत्ते यदवाप्तितुष्टः
स्यात्तत्स्ववश्यं प्रबलं बलित्वम् ॥८॥

शूरा यदुद्भूतनिजप्रतापाः
शौरिप्रतिष्ठामतिदुर्लभां ताम् ।
भजन्ति योगादिभिरप्यदस्त-
च्छौर्यं कथं नास्तु विराजमानम् ॥९॥

यदातुरः किं न करोति हीनो
वैद्यादिषु प्राप्तमतावपि ज्ञः ।
तस्यातिहानिः कियती गदस्य
यच्छोक एतत्प्रभवोऽपि दूरे ॥१०॥

यद्वर्थिनौ सोमरवी अपि द्राग-
हर्निशं मार्गमुदस्तलम्बम् ।
यतेत उत्क्रान्तुमपि प्रतिस्वं
स्यातां वशौ तौ च यशःप्रतापौ ॥११॥

यत्तामवाप्तुं धनिनोऽपि खिन्ना
दीना अदीनाश्च भवन्ति भूयः ।
सा धन्यता तत्कुलनामचेष्टा-
मत्याद्यधीना न भवेत् कथं तु ॥१२॥

कामादयो यत्कलयात्महेतून्
संक्षोभयन्तेऽपि सदाप्तकामान् ।
भाग्यैरपि प्राप्तुमुपोढशङ्कं
सौभाग्यमेतत् किमु भागि न स्यात् ॥१३॥

ययेह राजेव विनैव राज्यं
विराजते पूज्यसमाजभाजाम् ।
लोकार्च्यता सा कियतीव यत्त-
ल्लोकेश्वरार्च्यत्वमपि प्रहीनम् ॥१४॥

यत्सिद्धमूर्तिः स्मृतदृष्ट एव
कं कं न मूर्च्छास्पदमातनोति ।

सा रूपसम्पत् सुतरां कथं स्या-
दङ्गाङ्गगाङ्गं न यथा यथार्था ॥१५॥

न यैर्विहीनोऽनुगुणत्वमेति
पशुर्यथा भाति च यद्वदन्ते ।
न निर्गुणायाः स्तवसंप्रसादात्
ते ते गुणाः किं पदगा भवेयुः ॥१६॥

यामाप्य पूषा प्रथितो हि भास्वान्-
छायापि शोभैव यदाश्रयेण ।
यद्वान् विधत्ते स्तिमितं च लोकं
प्रभापि सा भासयते कथं न ॥१७॥

वीरा व्यथन्ते न हि यत्प्रसन्ना
रणादिषु क्रूरकृतप्रयोगे ।
आर्यैः समीर्यं तदनन्तधैर्यं
वीर्यं न वीरेश्वरताप्रसिद्ध्यै ॥१८॥

श्रेयस्करास्ते स्थितयेऽपि येषां
प्रत्येकमेवात्मनि संयतन्ते ।
श्रेयांसि तानीह न कानि कानि
भवन्ति भूयः प्रतिवर्धकानि ॥१९॥

विलोक्य लीलां न पृथग्विधातुं
प्रत्येति यां विष्णुरपीह जातु ।
शुभोदया सत्कृतभावपूर्णा
सेवेत सा श्रीः स्वयमेव रक्ता ॥२०॥

यैस्तर्जितो दुःखमिहानुभुङ्क्ते
स्वाच्छन्द्यवन्ध्यो निरयं परत्र ।
सर्वाणि खर्वाणि कथं न यान्ति
स्वापेऽपि पापान्यनवाप्यभावम् ॥२१॥

यानान्तरांस्तर्जयितुं परेण
परेण निर्जित्य किलान्तरेण ।
न शक्यतेऽयं सदयोदयस्थो
लोभादयस्तेऽप्यपरे परे स्युः ॥२२॥

यद्भान्तरा राजवदत्र भाति
यैः संगतो भीतिकरोऽपि मृत्योः ।
ये स्वे यथा भान्ति विभिन्नदेहाः
किं बन्धवो नान्तरबन्धनाय ॥२३॥

अन्येषु या व्याधितया प्ररूढा
याभिः कुलं याति भुजिष्यभावम् ।
सुता इमाः पुत्रितयान्ववाय-
मुद्धारयन्त्यो न सुखाय किं स्युः ॥२४॥

ख्याताः परं ये सहधर्मचारे
ते रामयन्तो न कथं नु रक्ताः ।
भूषाविभूषाः सततं सुशीला
दारा उदाराः सरयौवनाभ्याम् ॥२५॥

पुंनामभीतेर्हतिहेतवो ये
यद्भाषितं बाल्य इवामृतौघः ।

ये सद्गुणा वंशधृतौ प्रसिद्धा-
स्तेऽलङ्क्रियां कुर्युरलं सुपुत्राः ॥२६॥

यद्दर्शनादन्वयसंप्रचार-
शङ्काङ्कमुल्लङ्घ्य सुखेन याति ।
विश्राममस्तातिभरो यथा ते
पौत्राः पवित्रं तनुयुश्चरित्रम् ॥२७॥

यत्सम्भृता एव सुपुण्यजन्या
कृत्स्नेऽपि घस्रा वयसि प्रगण्याः ।
महोत्सवैर्मन्दिरमिन्दिरैक-
निवासमेतैः सततं विभायात् ॥२८॥

कृत्येषु वैमत्यमपेत्य नित्यं
प्रीत्यानुरक्ता हितसत्यवाचः ।
वैचित्र्यराहित्यकरा अतीत-
शङ्काः सुभृत्या अपि तं भजेयुः ॥२९॥

आद्यासु हृद्यास्वनवद्यपद्य-
गद्यासु मद्यप्रमदोन्मदासु ।
विद्यासु वैषद्यकरीषु सद्यो
वर्णाद्य आद्यन्तविधेर्विधिः स्यात् ॥३०॥

अगण्यनैपुण्यधनाग्रगण्यः
पुण्येन लभ्यं स्मृतिमात्र एव ।
आदाय राजन्यजनः स्तवेशं
रणं विशन् स्याद् विजयी कथं न ॥३१॥

क्रेतुं च विक्रेतुमुपदाधाति
वस्त्वेव यद्यत् स्तवसंप्रसादात् ।
तेनैव तेनैव न भूरिवित्त-
प्रलाभवित्तोऽस्तु कथं नु वैश्यः ॥३२॥

अप्यन्यवर्णान् परिचर्य यत्ना-
द्यथा न शूद्रः सुखमेति सम्यक् ।
तथा स्तवेशानुगृहीत एव
किं किं न तद्याति निरस्तयत्नः ॥३३॥

पुत्रार्थिनः पुत्रवतामधीशा
वित्तार्थिनो वित्तभरस्य पूर्णाः ।
यं यं च कामं मनसादधाति
कामी प्रकामं स स नास्य दूरे ॥३४॥

येनैव शर्मेह परत्र वा स्यात्
प्राप्योऽपि यो भूरिकृतप्रयत्नैः ।
अधर्मसांमुख्यमपि प्रयातु-
रग्रे भवेत् किं न स धर्म एव ॥३५॥

रूपेण रत्या अपि जैत्रदेहा
शीलेन सत्या अपि वर्द्धितेहा ।
करोति हर्षैकनिदानभूता
कन्यापि पुत्रीपदमेव तत्र ॥३६॥

क्षेत्राणि सस्येन विजृम्भितानि
विनान्तरायं त्रिविधेन च स्युः ।

गावः पयोऽपि प्रवहन्ति भूयो
नद्यो यथा कामदुघा घटोध्नयः ॥३७॥

येनावृतः किंचन संविधातुं
नेष्टे न तज्जातु भवेदभव्यम् ।
पूर्णैर्गुणैर्दर्शितविभ्रमोऽपि
याभिर्हतस्ता विपदः कथं स्युः ॥३८॥

नृपादपि प्राप्तबलान्न भीती
रिपोर्न वा दुष्टकलादपि स्यात् ।
शुभेषु भावेष्वशुभेषु वापि
सदा शुभैवास्य भवेन्मनीषा ॥३९॥

संतर्पयन्तीं निजबन्धुवर्गं
दानेन मानेन सभाजनेन ।
यशोर्जनेन प्रथितेन नाम्ना
लभेत सम्यक् कुलधुर्यतां सः ॥४०॥

अपि प्रलग्नाः श्रितगोचराश्च
ग्रहा न तं व्योम यथा स्पृशन्ति ।
रामस्य नामेव निशम्य न स्यू
रक्षांसि तं द्रष्टुमपि क्षमाणि ॥४१॥

काकोदरास्तं विनतातनूज-
मवेक्ष्य दूरादिव नीरसाः स्युः ।
प्रीत्या महादेवमिव प्रपन्ना
भूताः पिशाचा अपि तं भजेयुः ॥४२॥

डाकिन्य एनं स्वसुतं जनन्यः
प्रेम्णेव सम्यक्परिपालयेयुः ।
वन्याश्च सत्त्वाः सुनिरस्तसत्त्वं
पञ्चाननं वीक्ष्य यथा द्रवेयुः ॥४३॥

सुखासुखे ये न विदन्ति कर्तुं
तानप्यवश्यं परिपीडयन्ति ।
शिशून् ग्रहा ये निगृहीतभीता
अनुग्रहादस्य न ते कथं स्युः ॥४४॥

द्वन्द्वानि यानीह न जातु सन्धि-
सन्धानि वा यानि पुरो गतानि ।
स्निग्धप्रथां द्वेषयुतानि भूयः
किं नैष तत्प्रीतिकृतिप्रसिद्धः ॥४५॥

दुःशृङ्खलाभिः कलितोऽपि दुर्गे
कारागृहे मन्तुहतोऽपि भूयः ।
ध्यानादिकादस्य महानुभूतेः
कथं न मुच्येत यथेह मुक्तः ॥४६॥

न रामवद्दारजमात्मजोत्थं
वसिष्ठवन्नाच्युतवत् स्वजं न ।
दशास्यवन्मित्रकृतं न शोकं
पश्येद् वियोगं च स कल्पजीवी ॥४७॥

अन्धोऽपि गार्ध्रं बलमश्वियातं
लभेत स्वरादिव जीवलोकः ।

बाधिर्यनिघ्नः श्रुतिमानरं स्या-
न्मूकोऽपि वागीशतयेव कीरः ॥४८॥

योन्यात्मबिन्दुः परमुद्रयेव
गर्भः स्थिरः किं न पतन्नपि स्यात् ।
निबद्धगर्भत्वमदः स्रवेऽपि
सुखप्रसूतिश्च न दुर्लभैव ॥४९॥

कृतेन सूर्यस्य नवां नवेन
मयूरवद् दिव्यतनूमवाप्य ।
अनर्थमुक्तः पठनाच्छ्रुतेर्वा
कथं भवेदस्य न मोदमानः ॥५०॥

अदृष्टपुत्रास्यकलेशसम्प-
दपीन्द्रियग्राममलं नियम्य ।
पाठाच्छ्रुतेर्वास्य शुचिः सुपुत्र-
प्राप्तिप्रसिद्धो वसुदेववत् स्यात् ॥५१॥

चातुर्थिकाद्येभ्य उरुज्वरेभ्य-
स्तेभ्यो दशभ्योऽपि महागदेभ्यः ।
भूतादिजेभ्यः श्रवणादपि स्या-
द्रसेश्वरं प्राश्य यथा विमुक्तः ॥५२॥

न विस्मरेत् संश्रुतमश्रुतं च
तत्तुल्यमुल्लेखकलां नयेत ।
वक्ता भवेद् वाग्विधिवच्च वृद्धै-
र्बालोऽपि वृद्धान् विजयेत काव्यैः ॥५३॥

यः पञ्चपथ्यामपि वा स्तवेशं
जपेदधीयेत च नान्यचेताः ।
मर्त्योऽपि भोगायतने निविष्टो
नान्त्यं लभेतादिममेव भोगम् ॥५४॥

गुप्ते द्विधापि प्रथिते च विज्ञो
देव्याश्रयस्थो नवरात्र अस्याः ।
मूर्त्यन्तिके भक्तियुतोऽतिपीत
एकाकिभावं मनसापि यातः ॥५५॥

अपास्तभीतिः श्रितधैर्यनीति-
रावर्तयेद्यः शतधा स्तवेशम् ।
साक्षाद्भवत्यस्य निजेप्सितानि
विश्राणितुं सा सुभगा भवानी ॥५६॥

[ युगलकम् ]

गिरौ सुरम्ये किल सिद्धपीठे
तत्क्षेत्रवर्ये त्रिदशालये वा ।
प्रसिद्धिभागष्टतयाशु सिद्धिः
सिद्धा भवेदिष्टतमा च पाठात् ॥५७॥

आवर्त्तयेद्यो दशधापि भूमि-
शय्यासनस्थो जितदुर्हृषीकः ।
स्वाहारमाहृत्य यतं मितं वा
स्वप्ने वरस्थां स च पश्यतीशीम् ॥५८॥

सहस्रधावर्त्तनतः स्तवेशं
नरोत्तमा ये प्रपठन्ति भक्त्या ।
सिद्धाश्च ते सिद्धिविधानदक्षा
आनिग्रहानुग्रहयोः क्षमाः स्युः ॥५९॥

सत्काव्यसंस्कारविदर्भितानि
शास्त्राण्ययनभ्यासहतान्यपि स्युः ।
स्वतोऽभिधातुं किल भारतीशाः
शोभारती प्रोन्मिषिते दधानाः ॥६०॥

तान्रञ्जयन्तो नखरान्किरीट-
विचित्ररत्नोत्करसंकरेण ।
सर्वस्वदानप्रथिता महेशा
उपासते शम्भुमिवामरौघाः ॥६१॥

शाक्ताष्टगन्धेन विलिख्य भूर्जे
शुभे दिनेऽभ्यर्च्य नवं कुमारीः ।
विप्रान् वरस्त्रीरपि चन्दनाद्यैः
सन्तर्प्य नानामृतभोज्यमुख्यैः ॥६२॥

बध्नन्ति रक्षाविधये य एनं
कण्ठे करे वा निजमूर्ध्नि गेहे ।
तथा विशेषेण किशोरकाणां
ते कीर्तिभाजो नृपपूजिताः स्युः ॥६३॥

[ युग्मम् ]

रिपोर्न दुष्टान्न नृपान्न तेषां
न दारतो वा न पराभिचारात् ।
न दुर्गतेर्नोदधिसिन्धुवेगात्
पोतादिकेभ्योऽपि भवेन्न भीतिः ॥६४॥

द्यूते रणे वाधिकृतौ विवादे
कथं जयं ते न हि यान्ति जैत्राः ।
नरा नरेन्द्रा अपि माननीया-
स्तत्प्रेष्यतां यान्ति कथं न भक्त्या ॥६५॥

तारुण्यपूर्णाः स्मरबोधघूर्णा-
स्तान् विह्वलास्ता रतिरागनिघ्नाः ।
स्वयं समासक्तिमिताः कथं न
वराङ्गना नान्यकला भजन्ते ॥६६॥

विलिख्य तं यन्त्रितमात्तशुद्धि-
र्यो धारयेन्मूर्ध्नि गले रणस्थः ।
युध्यन्तमेनं मुहुरीक्षते न
योद्धा परः सम्मुखमागतोऽपि ॥६७॥

यो वा ध्वजाद्येषु पदेषु संख्यं
विशेत् स्तवेशं प्रविलिख्य वीरः ।
अप्येकमेनं बहुधा विलोक्य
हतौजसः किं न परे भवेयुः ॥६८॥

विलुप्तसंज्ञाः शिशुवद् विमूढाः
स्मर्तुं निजास्त्राण्यपि नेहमानाः ।

जयेन्दिरालिङ्गितदेहगेहं
　　किं नारयस्तं शरणं व्रजेयुः ॥६९॥
देहे गृहे वा लिखितोऽपि यत्र
　　नवेश्वरः स्यात् परिपूजितश्च ।
तत्राभिचारः प्रभवेन्न शापो
　　बाधां विधातुं न न दस्यवोऽपि ॥७०॥
न बाणवीरादिककीलनं वा
　　न कापि कृत्या न च पूतनादिः ।
प्रेताः पिशाचा न न राक्षसा न
　　भूता न वा तत्र विशन्ति जातु ॥७१॥
शस्त्रान्न नाग्नेर्न जलान्न वायो-
　　र्भीतिर्भवेत्तत्र कदापि कापि ।
दुर्वृत्तपापान्यपि तत्र बुद्धे-
　　र्विघ्नं विदध्युर्न कथंचनापि ॥७२॥
करीन्द्रशालास्वपि मन्दुरासु
　　गवां व्रजेऽजादिवृतौ च भक्त्या ।
तद्दोषशान्त्यै प्रपठेच्च कूट-
　　पाकल्यपोहाय नवेशमेनम् ॥७३॥
न किङ्करा दूरमपि स्तुवन्तं
　　द्रष्टुं यमस्यापि समं क्षमेरन् ।
भुक्त्वेह भोगाञ्छिवलोकमेति
　　चिरादनन्तं परमाप्यमन्ते ॥७४॥

घोरासु बाधास्वखिलासु सिद्धि-
रोधासु तत्तद्विधिपूर्वमेनम् ।
सर्वैकमङ्गल्यमपास्तदुःखं
स्वर्ग्यं पठेन्नित्यसमाहितान्तः ॥७५॥

तृप्तिं सपर्याभिरनुत्तराभि-
र्विधाय सम्यग्जपतां स्तवेशम् ।
पुरोगतः स्वस्त्ययनं परं त-
माकर्णयेद् वाखिलकर्मितेहः ॥७६॥

नाम्नां सहस्रमिदमीरितमीश्वरेण
पुण्यैकपुण्यमुदयोदयमादिदेव्याः ।
सम्यक्प्रकाशितमहः किल नन्दिकेन
नानन्दयेत् कमिह पूरुषतैकहेतुः ॥७७॥

नान्यत्स्तोत्रं परतरमतः कीर्त्तितं नापरो वा
मन्त्रस्तन्त्रे विहितविभवो नापरा वास्ति विद्या ।
आद्या सिद्धा प्रथितमितरन्नैव तीर्थं समर्थं
हन्तुं वाघं तदुदितमिदं सर्वतः सर्वरूपम् ॥७८॥

धन्याः केऽपि प्रथितयशसः पूर्णपुण्यैकगण्या-
स्ते त्रैलोक्ये नृपतिपतयो माननीयाधिमान्याः ।
नान्योद्भावाः परतरमतप्रज्ञया ध्वस्तमोहा
रोहं रोहं सुसुखसरणिं येऽर्चयन्त्यादिशक्तिम् ॥७९॥

जय जय हिततमपरमतमहित-
विदितविषदतरकृतविभवकरि ।

श्रितजनमदयसदयपरसुमुखि
शिवमयि शिवसखि भवजभयहरि ॥८०॥

लोके लोके सुकृतिकृतिभिः सेव्यते यादिशक्तिः
स्तोकं स्तोकं विभवमतुलं यद्भवं भावयन्तः ।
ते ब्रह्माद्या अपि चिरतरं विस्मयं यान्ति भूयाद्[1]
भक्तानां सा परमवरदा पूर्णमङ्गल्यरूपा ॥८१॥

श्रीकृष्णात्मपरानुभूतिविभवाच्छ्रीकृष्णकौलादभूत्
साहिब्कौल इति स्फुटं शिवपदं बुद्धेर्जनित्र्याश्च यत् ।
भक्तिस्तद्धृतिराजितस्य सुफला स्वन्ता गता मे महा-
काव्ये नामविलासनाम्नि ललिता पूर्णप्रथा षोडशी ॥८२॥

श्रीज्ञानिनाथाङ्घ्रिमहार्चनाभिः
संसिद्धसिद्धीशतयातिसिद्धः ।
नाम्नां विलासे प्रणिनाय साहिब्-
कौलो महेश्याः परिपूर्णभावम् ॥८३॥

इति श्रीमहामाहेश्वराचार्यवर्यसाहिबकौलानन्दनाथविरचिते
नामविलासे षोडशी भक्तिः ॥१६॥

---

१. ख. ग. 'देवी भक्तानां सा भवतु वरदा' पाठः ।

ये मात्सर्य्यवितानसंवृतधियः प्रत्येष यत्नो न तान्
भातीशाः क इवेह कर्त्तुममले सोमाङ्कपङ्के परम् ।
केचित्ते तु जयन्ति हन्त कृतिनो ये सन्ततं प्रोद्यता-
स्तन्नैर्मल्यविधौ चकोरकतकक्षोदाः सुधोद्धारकाः ॥१॥

वाचा किंचन वक्ति किंचन पुनर्धत्ते स्वचित्ते धिया-
प्यन्यत् किंचन निश्चिनोति नयनेनालोकयत्यन्यतः ।
वृत्तं चान्यगतं शृणोति विफलाहङ्कारमालाकुलो
जानीमो न नसज्जनस्य परता कस्मिन्नु भावे समे ॥२॥

विडालकः श्येनकरागतं किं
विक्लिन्दते मांसमवेक्ष्य दूरात् ।
उड्डीनतालभ्यमिदं नखास्त्र-
वतां परं जातु न हस्तमेति ॥३॥

विमूढाः समेताः प्रयान्त्वाढ्यवेशा-
स्तथैकोऽपि तज्ज्ञः प्रयात्वस्तवेशः ।
मृगाणां गणा द्वेषिणा चैककेन
समेता विचित्राः सदृक्षाश्च किं नु ॥४॥

अष्टाभिः किं न साक्षात्तनुभिरभिगतिः किं महादेवताख्या
त्र्यक्षत्वेन प्रसिद्धा न हि किमु न महाशक्तिमत्त्वं परेह्यम् ।
किं सा सर्वात्मता वा न च भवति परं किं न मृत्युञ्जयत्वं
किन्त्वज्ञातः स मूढैर्यदि शिवकलया वञ्चितास्तत्त एव ॥५॥

महार्थरत्नादिगवेषणायां येषां विभज्येत हि बुद्धिपोतः ।
त एव दौर्भाग्यहता इयत्त्वाद्रत्नाकरत्वं किमु हीनमब्धेः ॥६॥

पुष्पाकरत्वं सुरभिप्रकाशा-
वकाशमेकान्तरसाधिकारम् ।
एतान् गुणान् यद्यविचार्य भीतः
स्वाराम ऐक्यात् क इवात्र यत्नः ॥७॥

श्रुत्यन्तादिकदर्शनेषु वितता यद्वन्मनीषास्ति तत्-
साहित्येऽपि तथैव लब्धरसतालीलाविलोला परम्
ब्रह्मानन्दकथैव यद्यपि मता कैवल्यबोधोद्धृतौ
रामानन्दकथा तथापि विचिता तत्त्वानुभूतौ किल ॥८॥

भूरीणामपि ताराणां ज्योतिराख्यास्ति किं न हि
ज्योतिषां ज्योतिरेकस्तु चन्द्र एव कलानिधिः ॥९॥

तमो हरति सोमादिरपि सत्यं तथापि सः ।
एक एव जयी भास्वान् यः प्रसिद्धोऽम्बरे मणिः ॥१०॥

किं नौज्ज्वल्यं स्फटिक उदितं किं हिमे वा न भाति
किंवा तारास्वपि न न पयोमुख्यभावेऽपि किंवा ।
मुक्तास्वेव प्रथितमिह तत् किं नु यासां महार्घं
रत्नाभिज्ञाविदितधिषणो वेद कश्चित् स्वरूपम् ॥११॥

माणिक्यशैलं परिलोक्य लोको-
त्तरं जडत्वाभिहता व्रजन्ति ।
शाखामृगा यद्यपि ते तथापि
विदन्ति किं मूल्यमलं गुणं वा ॥१२॥

बालां सालंकृतिमपि रसोद्गारिकां वीक्ष्य निद्रा
किं वापैति प्रकृतिसुलभाबोधकृद् बालदृष्टेः ।

धन्यः कश्चित्स तु युवजनस्तत्कलाकौशलेन्दुं
यो दृष्ट्वैवोच्छलदतिरसं चित्तसिन्धुं विधत्ते ॥१३॥

कश्मीरोदयभूधरात्स उदभूत् सत्तीर्थसूर्यो यतः
सर्वाब्धिप्रथितप्रसादचतुरः सोऽपि प्रदोषाद्धृतः ।
यातो दुर्गणितान्तमन्धतमसं दीनस्तदस्तादहो
यच्छक्त्या सकलान्तकारकृतिने कालाय तस्मै नमः ॥१४॥

सम्यक्सामपरा रमापि चपला यत्रैव येन क्षमा
दुर्धर्षापि धृता च येन जनितो विश्वादिसर्गः स्मरः ।
विष्णुः स्वेन च योऽवतीदमखिलं तं चेद्दितेर्दुःसुता
हेलन्ते स्वनिकारणाय तदिदं न त्वस्य काचित्क्षतिः ॥१५॥

फुल्लारविन्दसरसीं निकषा स्थितोऽपि
ख्यातां[1] गुणैः किमधिगच्छति दर्दुरौघः ।
भृङ्गस्तु सौरभमवेत्य समीपमेत्य
पूर्णं रसं पिबतु नन्दतु निन्दताद्वा ॥१६॥

गुणानां हृदि भूरीणां विनयाज्जायते चयः ।
विधायादौ महाकुक्षिं सिन्धू रत्नाकरः कृतः ॥१७॥

[ इत्यन्योपदेशश्लोकाः ]

शाके विक्रमभूभृतोऽनलभुजागाब्जैर्मिते हायने
कश्मीरेषु च नेत्रवेदगणिते पक्षे शुचौ माधवे ।
भूताहे गणपाधिपेऽन्तमनयद् वेदाद्रिवर्षाङ्किते
साहिब्कौलपदे विलासमुदितः श्रीशक्तिनामान्यनु ॥१८॥

---

१. ख. ग. 'ध्यातां' पाठः ।

त्रिपुरवरबाला त्रिपुरसुबाला
त्रिपुरसुभाला त्रिपुरुषकाला
विगलितकाला हृतहरकाला
सकलविशाला सकलविशाला
गिरिवरशाला कृतपरताला
ऽकृतपरताला कृतपरताला
सितमणिमाला विलसितमाला
शिवमयमाला कचकचमाला-
विजिततमाला रिपुविषमाला
करगकपाला श्रितजनपालाश्रितजनपाला
सितकरवाला सुमतिनिभाला
गिरिशसभाला पदतिमराला
प्रसरदरालालकसुकराला
कृतभवजाला हृतभवजाला
हृदयरुजाला धृतकरवाला-
ऽवितसुरबाला सृतबहुबाला
मतफलसालाकृतिजितसाला
स्वरसरसाला समभिनवम् ॥१॥
प्रथितपरभावा गिरिशविभावा
सतदनुभावानतपरिभावा
गलदभिभावा जनितसुभावा
भवपरभावा नकलितभावा

महदनुभावा महदनुभावा-
ऽमहदनुभावा शिखिभवभावा
विसदृशभावाविसदृशभावा भवनविभावा
कलकलरावा समधुररावा
गजजयिरावाऽऽसनहरिशावा
खिलमतिशावाखिलमतिशावा परिबलधावा
वितुलसुधावा करिमलधावा-
ऽसुखतरहावा सुखतरहावा-
ऽतिसवनहावा त्रिविषयदावा-
हतिशपदावा जनिवनदावा-
ऽसहृदययावा सहृदययावा-
ऽधरहतयावा हतमतयावा-
हतमतयावा स्वमतलयावा समभिनवम् ॥२॥
सहजनिजरामानतिपररामा
विरतविरामा सुरवररामा-
हितपरिरामा परमभिरामा
त्रिनयनधामाधिपतिसुधामा
त्रिभुवनधामा भजननिकामा-
दृतकृतकामानवनवकामा-
वयवितवामामरपतिवामा
भ्रुकुटिसुवामा सुकुसुमदामा-
वृतकचदामा विहतविदामा
बहुविधनामाखिलपरिणामा निगमविनामा

परिचितसामा भविकृतसामा
स्तुतिमयसामा दितिजनियामा
विरहितयामा कलननियामा-
ऽप्रतिमितभामा प्रतिहतभामा-
ऽप्रतिहतभामा सखितरलामा
कनकललामातिशयललामा-
ऽद्रिकुलललामा स्वकुलललामा
विविधकलामा कलितशिवम् ॥३॥
कुमुदजयितारा द्युतिहततारा
जिनमततारा परसुखतारा
प्रतिमितताराधिपसुखतारा
प्रतिकृतहारावयवविहारा
लसदुपहारा सुरसितहारा
गलधृतहाराहलफणितारा-
तिहृदयहारा श्रुतिपरिहाराऽश्रुतिपरिहारा
विविधविकाराकृतिमयकारा-
जनितनिकाराबलदपकाराहतिपरिकारा
जगदुपकारा पदनतिकारा-
मखरकारापतदुपकारा
नयनससारापहृतविसारा
परतरसारा सततविचारा-
दृतचितसारा गलदभिचारा-
ऽऽदिविहितनारा परपुरनारासविनयनारा-

कचदसिधारा त्रिभुवनधारा
नमदुपधारा दिशतु शिवम् ॥४॥

अष्टाशीत्युत्तरैः पद्यं दृब्धमष्टशताक्षरैः ।
नीराजनाय भात्वेतच्छ्रीदेव्या दण्डकाभिधम् ॥१॥

## इति श्रीनामविलासः संपूर्णः

कृतिरियं श्रीमच्छ्रीमहामाहेश्वराचार्यवर्यसकलदैशिकवर-
वरेन्द्रपूज्यतमचरणसरोजसाहिबकौलपादानाम् ॥

---